# दैवपुरुषाकाराध्याय

योगयात्रा-१.१क/ यश् चक्षुर् जगतः सहस्रकरबद् धाम्नां च धामाऽर्कवन्

योगयात्रा-१.१ख/ मोक्षद्वारम् अपावृत्तं च रविवद् ध्वान्तान्तकृत् सूर्यवत्।
योगयात्रा-१.१ग/ आत्मा सर्वशरीरिणां सवितृवत् तिमांशुवत् कालकृत्

योगयात्रा-१.१घ/ साध्वीं नः स गिरं करोतु सविता योऽन्यैर् अतुल्योपमः॥

योगयात्रा-१.२क/ वक्ष्यामि भूपम् अधिकृत्य गुणोपपन्नं

योगयात्रा-१.२ख/ विज्ञातजन्मसमयं प्रविभ्क्तभाग्यम्।
योगयात्रा-१.२ग/ अज्ञातसूतिम् अथवाऽविदितैष्य भाग्यं

योगयात्रा-१.२घ/ सामुद्रयात्रिकनिमित्तशतैः पृथूक्तैः॥

योगयात्रा-१.३क/ कर्मऽन्यजन्मजनितं[K.न्यजन्मनि कृतं] सद् असच् च दैवं

योगयात्रा-१.३ख/ तत् केवलं भवति जन्मनि सत्कुलाद्ये।
योगयात्रा-१.३ग/ बाल्यात् परं विनयसौष्ठवपात्रता च[K.ऽपि]

योगयात्रा-१.३घ/ पुंदैवजा कृषिवद् इत्य् उपपाद्यम् एतत्[K.अत उद्यमेत]॥

योगयात्रा-१.४क/ सामन्तकालयसु[K.वसु]धोद्यममन्त्रभृत्यैर्

योगयात्रा-१.४ख/ दैवेन चेति कृषिवन् नृपतेः फलाप्तिः।
योगयात्रा-१.४ग/ स्याच् छिद्रम् एकम् अपि चेत् तत एव सर्वं

योगयात्रा-१.४घ/ नाशं प्रयाति हि द्दतेः स्रवणाद्[K.द्दतेश् चरणाद्] इवऽम्भः॥

योगयात्रा-१.५क/ ग्रहर्क्षतिथ्युद्गमराशिहोरा

योगयात्रा-१.५ख/ द्रेष्काणभागाद्यनुकूलमात्रम्।
योगयात्रा-१.५ग/ भवेद् यियासोर् यदि सिद्धिहेतुः

योगयात्रा-१.५घ/ स्वयं भवेद् दैवविद् एव राजा॥

योगयात्रा-१.६क/ मन्त्राभिषेकमणिबन्धनशान्तिकर्म

योगयात्रा-१.६ख/ होमोपवाससुरयागजपादिमात्रम्।
योगयात्रा-१.६ग/ स्यात् सिद्धिहेतुर् अथ चेद् विजगीआअतो[K.विजिगीषतो]ऽरीण्

योगयात्रा-१.६घ/ कस्मात् तदा नरपतिर् न भवेत् पुरोधाः॥

योगयात्रा-१.७क/ बुधार्थशास्त्राण्य्[K.बुद्ध्वाऽर्थशास्त्राण्य्] अपि मन्त्रिणोऽपि

योगयात्रा-१.७ख/ कुयुः प्रणामं न नरेश्वराणाम्।
योगयात्रा-१.७ग/ यद्य् आभिजात्यद्विपवाजिपत्ति

योगयात्रा-१.७घ/ कोशाद्यपेक्षा न भवेत् प्रधाना॥

योगयात्रा-१.८क/ स्वदेशे सन्तुष्टः करितुरगकोशे सति न यो

योगयात्रा-१.८ख/ भवेद् यायी सैन्धैः[K.सोऽन्यैः] कृतपरिभवो याति विलयम्।
योगयात्रा-१.८ग/ स्वचक्रेणैवऽसौ क्षपितधनराष्ट्रो भवति वा।
योगयात्रा-१.८घ/ गतो यो नादत्ते[K.ऽन्यान् आदत्ते] सुनयचरितो नीतिविधूरान्॥

योगयात्रा-१.९क/ उलूकस्य ध्वांक्षो निशि वलिभुजां सोऽह्नि वशगः

योगयात्रा-१.९क/ स्थले नक्रं सिंहो मृगपम् उद्के हन्ति जलजः।
योगयात्रा-१.९ख/ अबुध्या यः कालं व्रजति नृपतिर् देशम् अथवा[K.ओमित्तेद्]

योगयात्रा-१.९ग/ हते दर्पे वाक्यं स्मरति विदुषां सोऽरिवशगः//[K.थिस् ल्लिने ओमित्तेद्]

योगयात्रा-१.१०क/ रिपोः कृत्वाऽवज्ञां जितम् इति विदित्वा मदबलान्

योगयात्रा-१.१०ख/ न यत्नो हातव्यः शिखिविषसमोऽल्पोऽपि हि रिपुः।
योगयात्रा-१.१०ग/ प्रमत्तोऽद्रेः कुञ्जाद् अयुतबलभागैर् अपि नरैर्

योगयात्रा-१.१०घ/ हतो बद्धस्तम्भे कखति[K.बद्धः स्तम्भेकषति] मदलेखां द्विपपतिः॥

योगयात्रा-१.११क/ वप्रप्राकारयन्त्रप्रहरणपरिखातोय*मेयेन्धनाढ्यं[K.धान्येन्धनाढ्यं

योगयात्रा-१.११ख/ दुर्गं कृत्वाऽऽत्मगुपतं[K.ऽऽत्मगुल्म] द्विपतुरगभिषक्शिल्पिविप्राभ्युपेतम्।
योगयात्रा-१.११ग/ लुब्धत्रस्ताभिमानिप्रकुपितकुभृतां ज्ञातशीलैर् विहीनं

योगयात्रा-१.११घ/ कृत्वा शूराप्तसंस्थं परविषयम् इयाच् छुद्धपार्ष्णिर् नरेन्द्रः॥

योगयात्रा-१.१२क/ बुध्वा शक्तिं स्वपरबलयोः सामम् एकप्रदानैः[K.सामभेकप्रदानैः]

योगयात्रा-१.१२ख/ कृत्वोपायैर् व्यसनसमरोपायसंरक्षणैश्[K.गमनसमरोपायसंसर्पणैश्] च।
योगयात्रा-१.१२ग/ भक्त्या[K.साम्ना] साधून् धनविरहितान् अर्थलुब्धांश् च दानैर्

योगयात्रा-१.१२घ/ नेयाद्[K.भेद्यान्] भेदैस् त्रिभिर् अपि न ये साधयेत् तांश् च दण्डैः॥

योगयात्रा-१.१३क/ साम्नो जीवः सभृगुतनयो दण्डनाथौ कुजार्कौ

योगयात्रा-१.१३ख/ दानस्येन्दुः शिखियमबुधाः सासुरा भेदनाथाः।
योगयात्रा-१.१३ग/ वीर्योपेतैर् उपचयकरैर् लग्नगैर् वीर्यगैर्[K.केन्द्रगैर्] वा

योगयात्रा-१.१३घ/ तत् तत् सिद्धिं व्रजति तद् अहःस्व् आंशकैर्[K.अंशके] वापि तेषां॥

योगयात्रा-१.१४क/ षाड्गुण्ये सन्धिर् आदौ परिपणरचितो विग्रहोऽस्यापकारी[K.ऽस्यपाकारो]

योगयात्रा-१.१४ख/ नैतौ चेद् आसनं तत् परपुरगमनं सर्वसैनेय्न यानम्।
योगयात्रा-१.१४ग/ सैन्यार्द्धेनाभियुक्ते परपुरम् अपि यत् तद् द्विधायानम् उक्तं

योगयात्रा-१.१४घ/ संश्लेषोऽन्यत्र यः स्यात् स खलु निगदितः संश्रयोऽन्यो[K.ऽन्त्यो] गुणानम्॥

योगयात्रा-१.१५क/ मध्याह्नेऽर्कस् तुहिनकिरणो नित्यम् आक्रन्दसंज्ञः

योगयात्रा-१.१५ख/ पौरः पूर्वे भवति दिनकृद् यायिसंज्ञोऽन्त्यसंस्थाः[K.ऽन्त्यसंस्थः]।
योगयात्रा-१.१५ग/ जीवः सौरिस्[K.सौरस्] तुहिनकिरणास्यात्मजश् चेति पौराः

योगयात्रा-१.१५घ/ केतुर् यायी सभृगुजकुजः सिद्धिकानन्दनश् च॥

योगयात्रा-१.१६क/ यानं यायिभिर् आसनं शुभकरैर् वीर्यान्वितैर् नागरैर्

योगयात्रा-१.१६ख/ द्वैधीभावम् इयाद् यदा शुभकराः पौराः सयायिग्रहाः।
योगयात्रा-१.१६ग/ सौम्यैः सन्धिर् असद्ग्रहैश् च बलिभिर् युद्धेऽनुकूलैर् जयः

योगयात्रा-१.१६घ/ सर्वैर् अप्य् अशुभप्रदैर् नरपतिर् दैवाम्बितं संश्रयेत्॥

योगयात्रा-१.१७क/ कोशो हि राज्यतरुमूलम् अतोऽस्य शाखाः

योगयात्रा-१.१७ख/ पक्षी विपक्ष इव किं निधनः[K.विधनं] करोति।
योगयात्रा-१.१७ग/ अन्नाद् इवेन्द्रियगणो वसुतस् तथाऽन्नं

योगयात्रा-१.१७घ/ तत्प्राप्तिरक्षणविवृद्धिषु यत्नवान् स्यात्॥

योगयात्रा-१.१८क/ नीचाचिराढ्यनृपवल्लभतस्करेभ्यो

योगयात्रा-१.१८ख/ राष्ट्रं नृपेण परिरक्ष्यम् अतोऽस्य कोशः।
योगयात्रा-१.१८ग/ काले करप्रणयनं च यथोचितानां

योगयात्रा-१.१८घ/ तन्[K.तं] नार्थयेद् भवति येन जनापवादः॥

योगयात्रा-१.१९क/ यात्रा नृपस्य शरदीष्टफला मधौ च

योगयात्रा-१.१९ख/ छिद्रे रिपोर् न नियमोऽस्ति[K.ऽत्र] च केचिद् आहुः।
योगयात्रा-१.१९ग/ छिद्रेऽप्य् अरेर् भवति दैवयुतस्य सिद्धिः

योगयात्रा-१.१९घ/ सामान्यम् आमिषम् इदं प्रतिभूमिपानाम्॥

योगयात्रा-१.२०क/ शत्रोर् वधाय सचिवं शुभदैवयुक्तम्

योगयात्रा-१.२०ख/ आज्ञापयेन् नृपतिर् आत्मनि दैवहीने।
योगयात्रा-१.२०ग/ जह्यान् न चार्थम् अति[K.अपि] दैवपरोऽपि भूत्वा

योगयात्रा-१.२०घ/ दृष्टे द्विपे द्विपपदानुसृतिः किम् अर्थम्॥

योगयात्रा-१.२१क/ कालोऽभ्युपैति सकृद् एव नरं कथंचित्

योगयात्रा-१.२१ख/ प्राप्नोति तन् न समयं[K.स पुनः] खलु कालकांक्सी।
योगयात्रा-१.२१ग/ कालेन गोचरगतान् अनपेक्ष्य भक्ष्यान्

योगयात्रा-१.२१घ/ मन्दक्रमोऽप्य् अजगरः समुपैति सिद्धिम्॥

योगयात्रा-१.२२क/ दुर्गस्थितं फलम् अपक्वम् अनल्पयत्नात्[K.अनल्पयत्नं]

योगयात्रा-१.२२ख/ संसिद्धिम् अप्य् उपकरोति गुणं न पुंसाम्।
योगयात्रा-१.२२ग/ साधारणं स्वपतितं च भवेद् यतोऽतः

योगयात्रा-१.२२घ/ कालेऽभियुक्तपतितं रसवत् सुखाय//E२२

# आचाराध्याय

योगयात्रा-२.१कख/ रक्तासिताद्या हि यथाम्बरस्य वर्णाः सितस्यैष भवन्ति सम्यक्।
योगयात्रा-२.१गघ/ विलग्नतिथ्यादिगुणास् तथैव विशुद्धदोषस्य भवन्ति यातुः॥

योगयात्रा-२.२कख/ मद्याङ्गनावादितनृत्यगीतान्य् अक्षा वृथाद्या[K.वृथाट्या] मृगया द्युनिद्रा।
योगयात्रा-२.२गघ/ परोक्षनिन्देति च कामजानि दशैव विन्द्याद्[K.विद्याद्] व्यसनानि पुंसाम्॥

योगयात्रा-२.३कख/ वाक्पारुष्यं दण्डपारुष्यम् ईर्ष्या[K.ईर्ष्या] द्रोहोऽसूया पैशुनं साहसञ् च।
योगयात्रा-२.३गघ/ अर्थस्योक्तं दूषणं चऽष्टसंख्यः क्रोधोद्भूतो वर्ग एष प्रदिष्टः।
योगयात्रा-२.४कख/ महद् इदम् अनयानाम् आस्पदं मद्यम् आहुस् तनुधनमतिसत्त्वश्रेयसां कर्षणाय। योगयात्रा-२.४गघ/ समुपहतमतिः सन्[K.संस्] तत्प्रधानेन्द्रियत्वाद् गणयति न हि भक्ष्याभक्ष्यम् अन्यानि चैवम्॥

योगयात्रा-२.५क/ पत्नीयत्य् अपि मातरं मदवशात् पत्नीं च मात्रीयति

योगयात्रा-२.५ख/ श्वभ्रीयत्य् अपि मन्दिरं श्लथशिलं कूपं च गेहीयति।
योगयात्रा-२.५ग/ स्वल्पं वार्य् उदधीयतीश्वरम् अपां मोहात् स्थलीयत्य् अपि

योगयात्रा-२.५घ/ मित्रीयत्य् अपि पार्थिवं किम् अपरं कुर्यान् न यन् मद्यपः॥

योगयात्रा-२.६कख/ भूयोऽपि दीव्यति जितो जयलिप्सयैव प्राप्नोति तच् च सविशेषतरं कदाचित्।
योगयात्रा-२.६गघ/ कृत्वाऽप्रियाणि मदतः परितोऽप्य् अटन्ति[K.परितप्य चान्ते] भूयः[K.भूपः] पिवेत् किम् अपि दोषविशेषकांक्षी॥

योगयात्रा-२.७कख/ अभ्यागमोत्सवभिषग्वचनोपदेशैः कामं पिबेद् अमतिलोपकृद् अप्रकाशम्[K.आप्रकामम्]।
योगयात्रा-२.७गघ/ द्यूतं विनेन्द्रियसुखानि हितानि युक्त्या विज्ञस्य[K.शून्यं हि] जीवितफलं विषयैर् विना किम्॥

योगयात्रा-२.८क/ शौचाचारविवर्जितः शव इव त्यक्तः सुहृद्बान्धवैर्

योगयात्रा-२.८ख/ निश्शङ्को निरपत्रपो गतघृणः कृच्छ्राद् अवाप्ताशनः।
योगयात्रा-२.८ग/ बन्धुर् नास्य निबन्धनं न शपथो लोकद्वयं नेक्ष्यते

योगयात्रा-२.८घ/ मायावी कुलपांशलश् च कितवो दोषाकरो[K.दोषार्णवो] निःसुखः॥

योगयात्रा-२.९कख/ दैवज्ञमन्त्रिसुहृदाप्तवचांसि राजा यो नऽऽद्रियेन् निजविचेष्टितदुष्टबुद्धिः[K.द्रियेत् स्वमतिचेष्टितदुष्टबुद्धिः]।
योगयात्रा-२.९गघ/ सोऽग्रेमरेण[K.सन्नायकेन] रहितोऽन्ध इवऽचिरेण हास्यत्वम् एति पतितो विषये रिपूणाम्॥

योगयात्रा-२.१०क/ मेधावी मतिमान् अदीनवचनो दक्षः क्षमावान् ऋजुर्

योगयात्रा-२.१०ख/ धर्मात्माप्य्[K.धर्मात्मा त्व्] अनसूयको लघुकरः षाड्गुण्यविच् छक्तिमान्।
योगयात्रा-२.१०ग/ उत्साही पररन्ध्रवित् कृतधृतिर् वृद्धिक्षयस्थानवित्

योगयात्रा-२.१०घ/ शूरो न व्यसनी स्मरत्य् उपकृतिं[K.उपकृतं] वृद्धोपसेवी च यः॥

योगयात्रा-२.११कख/ परीक्ष्यकारी न विकस्थनश्[K.विकत्थनश्] च दृढपतिज्ञोऽतिदृढपहारी।
योगयात्रा-२.११गघ/ जितेन्द्रियः स्याज् जितकोपलोभनिद्रालसस्थानपरिग्रहश् च॥

योगयात्रा-२.१२कख/ त्यागी विनीतः प्रियदर्शनश् च व्यपेतमोहः प्रतिपत्तियुक्तः।
योगयात्रा-२.१२गघ/ देशस्य कालस्य च भागविज्ञः[K.भागविद् यः] स्वयं च यः स्याद् व्यवहारदर्शी॥

योगयात्रा-२.१३कख/ शब्दार्थविन् न्यायापटुः प्रगल्भः संग्रामविद्याकुशलोऽभिजातः।
योगयात्रा-२.१३गघ/ स्मिताभिभाषी मितसत्यवक्ता दैवान्वितो यस्य[K.यश् च] स धाम लक्ष्म्याः॥

योगयात्रा-२.१४कख/ गुणैः समस्तैर् अपि संप्रयुक्ता कन्येव यात्रा विगुणाय दत्ता।
योगयात्रा-२.१४गघ/ करोत्य् अकीर्तिं सुखवित्तहानिं[K.सुखवित्तहीनां] यात्रान्तरज्ञानजडस्य[K.पात्रान्तरज्ञानजडस्य] दातुः।
योगयात्रा-२.१५कख/ गुणान्वितस्यैव गुणं करोति यात्रा शुभर्क्षग्रहलग्नयोगात्।
योगयात्रा-२.१५गघ/ व्यर्था सदोषस्य गुणान्विताऽपि वीणेव शब्दाश्रयवर्जितस्य॥

योगयात्रा-२.१६कख/ यात्रा विशुद्धाऽपि समं प्रवृत्ता पात्रानुरूपाणि फलानि धत्ते।
योगयात्रा-२.१६गघ/ जगत्य् उदीर्णाऽपि हि कौशिकस्य भा भानवी नैव तमः प्रमार्ष्टि॥

योगयात्रा-२.१७कख/ विचिन्त्य कार्याणि निशावसाने द्विषत्सुहृन्मण्डलसंश्रितानाम्।
योगयात्रा-२.१७गघ/ बलार्थदेशेषु नियोजितानां समाश्रितानां च कृताकृतानि॥

योगयात्रा-२.१८कख/ अनादृश्रितः ख्यातगुणः परोऽपि शूरोऽथवा साधुजनः प्रशस्तः।
योगयात्रा-२.१८गघ/ सम्पूजनीयो जनसंप्रहार्थम् ममेति देशोपगतो विचिन्त्य॥

योगयात्रा-२.१९कख/ सवेणुबीणापणवस्वनेन गीतेन पूर्वं व्यपनीतनिद्रः।
योगयात्रा-२.१९गघ/ शय्यां त्यजेत् तूर्यरवावसाने शृण्वन् गिरो मङ्गलपाठकानाम्॥

योगयात्रा-२.२०कख/ अज्ञातपूर्वाणि न दन्तकाष्ठान्य् अद्यान् न पत्रैश् च समन्वितानि।
योगयात्रा-२.२०गघ/ न चोर्ध्वशुष्कानि[K.युग्मपर्वाणि] न पाटितानि न युग्मपर्वाणि[K.चोर्ध्वशुष्कानि] विना त्वचा च॥

योगयात्रा-२.२१कख/ उदङ्मुखः प्राङ्मुखसंस्थितो वा ऋज्व् अव्रणं तच् च वितस्तिमात्रम्।
योगयात्रा-२.२१गघ/ अद्यान् नरेन्द्रो विनियम्य[K.विनिगृह्या] वाचं प्रक्षाल्य जह्याच् च शुभप्रदेशे[K.शुचौ प्रदेशे]॥

योगयात्रा-२.२२कख/ अभिमुखपतितं प्रशान्तदिक्स्थं शुभम् अतिशोभनम् ऊर्ध्वसंस्थितं च।
योगयात्रा-२.२२गघ/ अशुभकरम् अतोऽन्यथा प्रदिष्टं स्थितपतितं च करोति मिष्टम्[K.मृष्टम्] अन्नम्॥

योगयात्रा-२.२३कख/ प्रणम्य देवांश् च गुरूंश्[K.देवाण् स्वगुरूंश् च] पूर्वं दत्वा च गां वत्सयुतां द्विजाय।
योगयात्रा-२.२३गघ/ दृष्ट्वा मुखं सर्पिषि दर्पणे च नक्षत्रम् आदौ शृणुयात् तिथिं च॥

योगयात्रा-२.२४कख/ श्रुत्वा तिथिं भग्रहवासरं[K.भं ग्रहवासरं] च प्राप्नोति धर्मार्थयशांसि सौख्यम्।
योगयात्रा-२.२४गघ/ आरोग्यम् आयुर् विजयं सुतांश् च दुःस्वप्नजातं[K.दुःस्वप्नघातं] प्रियतां च लोके॥

योगयात्रा-२.२५कख/ दूर्वेभदानाञ्जनतीर्थतोयमृद्रोचनासर्षपपुष्पगन्धान्। योगयात्रा-२.२५गघ/ सिताम्बरोष्णीषसुवर्णरत्नान्य् आसेव्य कुर्याद् भिषजां वचांसि॥

योगयात्रा-२.२६कख/ स्मितप्रसन्नप्रथमाभिभाषितैः प्रसाददृष्ट्या करसंपरिग्रहैः।
योगयात्रा-२.२६गघ/ यथाभिरूपं[K.यथानूपं] हृदयान्य् अपि द्विषां प्रसादयन् धर्मसभां समाश्रयेत्॥

योगयात्रा-२.२७कख/ विनीतवेषाभरणः सदक्षिणं[K.विनीतवेषाभरणश् च दक्षिणं] कर[K.करं] समुद्यम्य विचक्षणान्वितः।
योगयात्रा-२.२७गघ/ सुखोपविष्टः स्थित एव वा नृपः समारिमित्रो व्यवहारदर्शने॥

योगयात्रा-२.२८कख/ क्षमान्वितोऽस्मीति विचिन्त्यम् एतद् दण्ड्येषु दण्डक्षमणं न धर्मः।
योगयात्रा-२.२८गघ/ दण्डप्रभोआवो हि स दुर्जनस्य हस्ते न यो जीवति साधुवर्गः॥

योगयात्रा-२.२९कख/ सुतराम् अभिवर्द्धतेऽभिमानो नीचानां क्षमयाऽन्वितेषु यस्मात्।
योगयात्रा-२.२९गघ/ अत उग्रतरेण ते निवर्त्त्या येनऽन्येऽपि खलास् तथा न भूयः॥

योगयात्रा-२.३०कख/ यस्मिन् गृहीतः[K.गृहीते] सदृशापराधो महाजनस् त्रासम् उपैति तस्मिन्।
योगयात्रा-२.३०गघ/ दण्डो निपात्यो मनुजेश्वरेन कालान्तरेऽन्यद् व्यपदिश्य कार्यम्॥

योगयात्रा-२.३१कख/ द्विरद इव मदेन विप्रयुक्तो विषरहितो भुजगो व्यसिश् च कोशः।
योगयात्रा-२.३१गघ/ परिभवम् उपयाति नऽपराधे यदि मनुजाधिपतिः करोति दण्डम्॥

योगयात्रा-२.३२कख/ एकस्य तुल्योदरपाणिपादा दण्डात् प्रभीताः[K.दण्डस्य भीताः] प्रणमन्ति मर्त्याः।
योगयात्रा-२.३२गघ/ अत्युग्रदण्डाद् अपि चोद्विजन्ते दण्डोऽपराधप्रतिमः शिवाय॥

योगयात्रा-२.३३कख/ दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः।
योगयात्रा-२.३३गघ/ अपक्षपातोऽर्थिषु राष्ट्ररक्षा पञ्चैव यज्ञाः कथिता नृपाणाम्॥

योगयात्रा-२.३४कख/ श्रान्तश् च तस्मिन् विनियुज्य साधून् संग्रामविद्यादिविभक्तकालः।
योगयात्रा-२.३४गघ/ सर्वाणि कार्याणि यथाक्रमेण कुर्यान् नृपः प्रत्यहम् आत्मवांश् च॥

योगयात्रा-२.३५कख/ राज्ञा कार्यं पञ्चमे पञ्चमेऽह्नि क्षौरर्क्षे वा श्मश्रु भस्योदये[K.तस्योदये] वा।
योगयात्रा-२.३५गघ/ त्यक्त्वा ताराः पञ्चसप्तत्रिपूर्वा[K.सप्तपञ्चत्रिपूर्वा] यात्राकाले नैव कार्यं न युद्धे॥

योगयात्रा-२.३६कख/ आचारस्थः सागरान्तां धरित्रीं भुङ्क्ते दीर्घं कालम् उत्खातशत्रुः।
योगयात्रा-२.३६गघ/ यत्राऽऽचारस् तत्र धर्मस्य वृद्धिर् धर्माद् भोगान् देहभेदेऽपि भुङ्क्ते//E३६

# अभियोगाध्याय

योगयात्रा-३.१कख/ अभिहितगुणसंयुतेन राज्ञा कथितगुणात्ययसंस्थितोऽभियोज्यः।
योगयात्रा-३.१गघ/ उपहतम् उपलभ्य चास्य देशं बलम् अथवा निरुपद्रुतोऽभियुञ्ज्यात्॥

योगयात्रा-३.२कख/ प्रचुरमशकयूकं मक्षिकादम्शपूर्वं बलम् अजलदवृष्ट्या पांशुवाताहतं वा[K.पांशुपाताहतं च]।
योगयात्रा-३.२गघ/ पिशितरुधिरधान्यप्राणिवृष्ट्या हतम् वा[K. च] करितुरगमनुष्या यत्र वाध्या न दीनाः[K.च ध्यानदीनाः]॥

योगयात्रा-३.३क/ शब्दायन्ते मुहुर् अपि शिवा गर्दभध्वानतुल्यं

योगयात्रा-३.३ख/ त्यक्तस्नेहाः परिजनसुहृद्वाहनोपस्करेषु।
योगयात्रा-३.३ग/ कष्टं को नः शरणम् इति वा वादिनो यस्य सैन्ये

योगयात्रा-३.३घ/ विद्विष्टा वा प्रवरपुरुषाः सोऽभियोज्यो नृपेण॥

योगयात्रा-३.४क/ निरालस्यावनतवदनाः केतनस्वप्नशीला

योगयात्रा-३.४ख/ भ्रष्टाचारा मलिनपुरुषच्छाययाऽऽक्रान्तदेहाः।
योगयात्रा-३.४ग/ दीर्घश्वासाः सजलनयनाः शोकलोभाभिभूताः

योगयात्रा-३.४घ/ सैन्ये यस्य द्विजगुरुसुहृद्द्वेषिणश् चैव योधाः॥

योगयात्रा-३.५कख/ अकारणप्रोद्गतरोमकूपा जये निराशाः प्रकृतेर् अपेताः।
योगयात्रा-३.५गघ/ अमङ्गलाचेष्टितजातहासाः सैन्ये नरा यस्य स चाभियोज्यः॥

योगयात्रा-३.६कख/ कपोतकोलूकमधूनि यस्य समाश्रयन्ते ध्वजचामराणि।
योगयात्रा-३.६गघ/ छत्रायुधादीनि[K.छत्रायुधाद्यानि] च सोऽभियोज्यो यस्याथवाऽस्यजलाशयानाम्[K.ऽनाहततूर्यशब्दाः]।
योगयात्रा-३.७कख/ प्रतीपगत्वं सरिताम् इषोश् च शोषोऽथवाऽशोष्यजलाशयानाम्।
योगयात्रा-३.७गघ/ अवारिदेशे सलिलप्रवृतिर् अहैतुकं[K.अवैकृते] चाप्सु तरेच् छिला वा॥

योगयात्रा-३.८कख/ भङ्गपातचलनान्य् अनिमित्तं रोदनानि च सुरप्रतिमानाम्।
योगयात्रा-३.८गघ/ अग्निरूपम् अनिलेन विना वा निश्चलानि च यदा प्रचलन्ति॥

योगयात्रा-३.९कख/ प्रसूतिवैकृत्यम् अकालपुष्पाण्य् आरण्यसत्त्वस्य पुरप्रवेशः।
योगयात्रा-३.९गघ/ प्रदोषकाले कृकवाकुशब्दा हिमागमे चऽन्यभृतः प्रलापाः[K.ऽन्यभृतप्रलापाः]॥

योगयात्रा-३.१०कख/ दीर्घं दीनं संहताः सारमेयाः क्रोशन्त्य् उच्चैर् नित्यम् एवऽनृतौ च।
योगयात्रा-३.१०गघ/ हन्युर् योषा योषितो निर्घृणाश् च दृष्यं नित्यं[K.श्वेतः काको] नक्तम् इद्रायुधं वा[K.च]॥

योगयात्रा-३.११कख/ तिला वितैला यदि वाऽर्द्धतैला[K.र्द्धतैलाः] सस्यस्य वृद्धिर् यदि वाऽतिरिक्ता।
योगयात्रा-३.११गघ/ अन्नस्य वैरस्यम् असृक् तरूणां शुष्कप्ररोहो विरुजां प्रणाशः॥

योगयात्रा-३.१२कख/ विहाय सर्पाखुविडालमत्स्यान् स्वजातिमांसान्य् उपभुञ्जते वा।
योगयात्रा-३.१२गघ/ व्रजन्ति वा मैथुनम् अन्यजात्यां दीप्ताश् च नित्यं विहगा मृगाश् च॥

योगयात्रा-३.१३कख/ भङ्गः पातस् तोरणेन्द्रध्वजानां शीतोष्मानां व्यत्ययो भूविदारः।
योगयात्रा-३.१३गघ/ निम्नोच्चानां तुङ्गता निम्नता च[K.वा] छाया चा[K.वा]ऽर्कस्यऽऽभिमुख्येन याता॥

योगयात्रा-३.१४कख/ त्र्यहातिरिक्तः पवनोऽतिचण्डो गन्धर्वसंज्ञस्य भवेत् पुरस्य।
योगयात्रा-३.१४गघ/ व्यक्तिर् भवेच् चऽहनि तारकाणां नक्तं च तारागणसंप्रणाशः॥

योगयात्रा-३.१५कख/ प्रासादवेश्मवसुधाशरगुल्मनिम्नेष्व् आवासका बलिभुजाम् अनपत्यता वा।
योगयात्रा-३.१५गघ/ एकाण्डजत्वम्[K.एकात्मजत्वम्] अथवा भुवि मण्डलानि कुर्वन्ति चक्रकम् इवोपरि वा भ्रमन्तः॥

योगयात्रा-३.१६कख/ उल्काऽभिघातेन तमोऽतिदीप्त्या वक्रातिवक्रेन सुतो धरित्र्याः।
योगयात्रा-३.१६गघ/ केतुर् गतिस्पर्शन -- धूपनेन चारेण पीडां कुरुतेऽर्कपुत्रः॥

योगयात्रा-३.१७कख/ त्रिभिस् त्रिभिर् भैर् अथ कृत्तिकाद्यैर् निपीडितैर्[K.निष्पीडितैर्] भूपतयोऽभियोज्याः।
योगयात्रा-३.१७गघ/ पाञ्चालनाथो मगधाधिपश् च कलिङ्गराड् उज्जयिनीपतिश् च॥

योगयात्रा-३.१८कख/ आनर्त्तराट् सैन्धवहारहोरौ[K.सैन्धवहारहौरौ] मद्रेश्वरोऽन्यश् च कुरङ्गनाथः[K.कुलिन्दनाथः]।
योगयात्रा-३.१८गघ/ एते हि कूर्माङ्गसमाश्रितानां विशेषपीडाम् उपयान्ति भूपाः॥

योगयात्रा-३.१९कख/ अङ्गेषु सूर्यो यवनेषु चन्द्रो भौमो ह्य् अवन्त्यां मगधेषु सौम्यः।
योगयात्रा-३.१९गघ/ सिन्धौ गुरुर् भोजकटे च[K.भोजकटेषु] शुक्रः सौरः सुराष्ट्रे विषये बभूव॥

योगयात्रा-३.२०कख/ म्लेच्छेषु केतुश् च तमः कलिङ्गे यातो[K.जातो] यतोऽतः परिपीडयन्ति[K.परिपिडितास् ते]।
योगयात्रा-३.२०गघ/ स्वजन्मदेशान् परिपीडयन्ति ततो[K.तेऽतो]ऽभियोज्या क्षितिपेन देशाः॥

योगयात्रा-३.२१कख/ सम्पूज्यन्ते भैरवोच्चानुनादै[K.भैरवोच्चानुरावै] रक्तैर् मांसैस् तालजङ्घादयो वा। योगयात्रा-३.२१गघ/ दृश्यन्ते वा यातुधानाः प्रभूता भ्रष्टश्रीकः सोऽपि देशोऽभियोज्यः॥

योगयात्रा-३.२२कख/ देशभ्रंशो यैर् निमित्तैः प्रदिष्टस् तास् ता वार्त्ता वक्ति लोके विशङ्कः।
योगयात्रा-३.२२गघ/ त्यक्त्वा देशं यान्ति यं भिक्षुका वा गम्यो देशो सोऽप्य् असाधुप्रवृत्तः॥

योगयात्रा-३.२३कख/ रोगाभिभूतं विषदूषितं वा यथा विनाशाभिमुखं शरीरम्।
योगयात्रा-३.२३गघ/ वैद्यः प्रयोगैः सुदृढं करोति राष्ट्रं तथा शान्तिभिर् अग्रजन्मा//E२३

# योगाध्याय

योगयात्रा-४.१कख/ देहः कोशो योद्धा वाह्यं मन्त्रः शत्रुर् मार्गोऽप्य् आयुः।
योगयात्रा-४.१गघ/ चित्तं कर्म प्राप्तिर् मन्त्री प्राग्लग्नाद्या भावाश् चिन्त्याः॥

योगयात्रा-४.२कख/ त्रिलाभवर्जं रविसौरिभौमा[K.रविसौरभौमा] निघ्नन्ति नो कर्मणि सूर्यभौमौ[K.सूर्यभौमाः]।
योगयात्रा-४.२गघ/ पुष्णन्ति सौम्या रिपुराशिवर्ज्यम् अस्तं[K.रिपुराशिवर्जम् नऽस्तं] भृगुर् मृत्युविलग्नम् इन्दुः॥

योगयात्रा-४.३कख/ तिथ्युद्गमेन्दुकरणर्क्षदिनक्षणेषु शुद्धेष्व्[K.पापेष्व्] अभीष्टफलदा नृपतेर् यथा स्यात्।
योगयात्रा-४.३गघ/ यात्रा तथा परम् इदं कथयामि गुह्यं शिष्याय नैऽतद् अचिराद् ह्य् उषिताय दद्यात्॥

योगयात्रा-४.४कख/ योगैः क्षितिपा विनिर्गताः शकुनैस् तस्करचारणादयः।
योगयात्रा-४.४गघ/ नक्षत्रबलैर्[K.नक्षत्रगुणैर्] द्विजातयः क्षणवीर्याद् इतरो जनोऽर्थभाक्॥

योगयात्रा-४.५क/ यद् यद् योगवशाद् व्रजत्य् अगदतां द्रव्यैर् विषं योजितम्

योगयात्रा-४.५ख/ संयुक्तं मधुना घृतं च विषतां गच्छेद्[K.गच्छद्] यथा दृश्यते।
योगयात्रा-४.५ग/ तद्वद् योगसमुद्भवं प्रकुरुते हित्वा ग्रहः स्वं फलं

योगयात्रा-४.५घ/ यस्मात् तेन समुद्यतोऽस्मि गदितुं योगान् विचित्रान् इमान्॥

योगयात्रा-४.६कख/ लग्ने गुरुर् बुधभृगू हिबुकात्मजस्थौ षष्ठौ कुजार्कतनयौ दिनकृत् तृतीयः।
योगयात्रा-४.६गघ/ चन्द्रश् च यस्य दशमो भवति प्रयाणे तस्यऽभिवाञ्छितफलाप्तिर् अलं नृपस्य॥

योगयात्रा-४.७कख/ होरातृतीयरिपुलाभगतैः क्रमेण जीवार्किभौमरविभिर् भृगुजेऽनुकूले।
योगयात्रा-४.७गघ/ यातोऽतिदृप्तम् अपि शत्रुबलं निहन्ति नैशं तमिस्रम् इव तिग्मम् अयूखकाली[K.अयूखमाली]॥

योगयात्रा-४.८कख/ उदयारिनभः स्थलगैर्[K.उदयारिनभस्थलगैर्] दिनकृद्यमशीतकरैः।
योगयात्रा-४.८गघ/ न भवन्त्य् अरयोऽभिमुखा हरिणा इव केशरिणः॥

योगयात्रा-४.९कख/ गुरुर् उदये रिपुराशिगतोऽर्को यदि निधने न च[K.च न] शीतमयूखः।
योगयात्रा-४.९गघ/ भवति गतोऽत्र शशीऽव नरेन्द्रो रिपुवनिताननतामरसानाम्॥

योगयात्रा-४.१०कख/ शुक्रवाक्पतिबुधैर् धनसंस्थैः सप्तमे शशिनि लग्नगतेऽर्के।
योगयात्रा-४.१०गघ/ निर्गतो नृपतिर् एति कृतार्थो वैनतेयवद् अहिं[K.अरीन्] विनिगृह्य॥

योगयात्रा-४.११कख/ मूर्तिवित्तसहजेषु संस्थिताः शुक्रचन्द्रसुततिग्मरश्मयः।
योगयात्रा-४.११गघ/ यस्य यानसमये रणानले तस्य यान्ति शलभा इवऽरयः॥

योगयात्रा-४.१२क/ सूर्येन्दू वलवर्जितौ वलयुतौ जन्मेशलग्नेश्वरौ

योगयात्रा-४.१२ख/ पाताले दशमेऽपि वा शशिसुतो लग्नस्थितो वाक्पतिः।
योगयात्रा-४.१२ग/ षट्सप्ताष्टमवर्जितेषु भृगुजः स्थानेषु यस्य स्थितो

योगयात्रा-४.१२घ/ यातुस् तस्य न विद्विषो रणमुखे तिष्ठन्ति योषा इव॥

योगयात्रा-४.१३कख/ सौरे भौमे[K.वा] लग्नगेऽर्फे[K.ऽर्के] खमध्ये कर्मण्य् आये[K.वा] भार्गवे चन्द्रजे च।
योगयात्रा-४.१३गघ/ यायाद् भूपः[K.भूपालः] शत्रुदेशं निहन्तुं दृप्तं शत्रुं[K.वा] कालवत्[K.कालयत्] क्रूरचेष्टः॥

योगयात्रा-४.१४कख/ लाभशत्रुसहजेषु यमारौ सौम्यशुक्रगुरवो बलयुक्ताः।
योगयात्रा-४.१४गघ/ गच्छतो यदि ततोऽस्य धरित्री सागराम्बुरसना वशम् एति॥

योगयात्रा-४.१५कख/ पापास् तृतीये हिबुके ? जीवो बिलग्ने शशलाञ्छनोऽस्ते।
योगयात्रा-४.१५गघ/ यस्योद्यमे तस्य बलं रिपूणां कृतं कृतघ्नेस्व् इव यात् नाशम्॥

योगयात्रा-४.१६कख/ चन्द्रेऽस्तगे देवगुरौ विलग्ने ज्ञशुक्रयोः कर्मणि लाभगेऽर्के।
योगयात्रा-४.१६गघ/ सौरारयोर् भ्रातृगयोश् च यातो नृपः स्वभृत्यान् इव शास्ति शत्रून्॥

योगयात्रा-४.१७कख/ गुरौ विलग्ने यदि वा शशाङ्के षष्ठे रवौ कर्मगतेऽर्कपुत्रे।
योगयात्रा-४.१७गघ/ सितज्ञयोर् बन्धुसुतस्थयोश् च यात्रा जनित्रीऽव हितानि धत्ते॥

योगयात्रा-४.१८कख/ पत्यौ गिरां लग्नगतेऽवशेषैर् एकादशार्थोपगतैर् यियासोः।
योगयात्रा-४.१८गघ/ विदार्यते शत्रुबलं समन्ताद् धर्मो यथा हेतुशतैर् युगान्ते॥

योगयात्रा-४.१९कख/ त्रिषण्णवान्त्येष्व् अबलः शशाङ्कश् चान्द्रिर् बली यस्य गुरुश् च केन्द्रे।
योगयात्रा-४.१९गघ/ तस्यऽरियोषाभरणैः प्रियाणि प्रियाः प्रियाणां जनयन्ति सैन्ये॥

योगयात्रा-४.२०कख/ केन्द्रोपगतेन वीक्षिते गुरुणा त्र्यायचतुर्थगे सिते।
योगयात्रा-४.२०गघ/ पापैर् अनवाष्टसप्तमैर्[K.अनवाष्टसप्तगैर्] वसु किं तन् न यद् आप्नुयाद् गतः॥

योगयात्रा-४.२१कख/ लग्नारिकर्महिबुकेषु शुभेक्षिते ज्ञे द्यूनान्त्यलग्नरहितेष्व् अशुभग्रहेषु।
योगयात्रा-४.२१गघ/ यातुर् भयं न भवति प्रतरेत् समुद्रं यद्य् अश्मना[K.ऽपि] किम् उत शत्रुसमागमेषु[K.उतऽरिसमागमेषु]॥

योगयात्रा-४.२२कख/ यस्योऽदयास्तारिचतुस्त्रिसंस्थाः शुक्राङ्गिरोऽङ्गारक --- सौम्यसौराः।
योगयात्रा-४.२२गघ/ द्विषद्बलस्त्रीवदनानि तस्य क्लान्तानि कान्तान् अवलोकयन्ति॥

योगयात्रा-४.२३कख/ पूर्वोक्तयोगे धनगो बुधश् चेच् छशाङ्कसूर्यौ च दशायसंस्थौ।
योगयात्रा-४.२३गघ/ अस्मिन् गतस्यऽलिकुलोपगीता नानावनोत्था द्विरदा भवन्ति॥

योगयात्रा-४.२४कख/ सूर्यादयोऽरिसहजाम्बरशत्रुलग्नबन्ध्वायगाः सुरगुरोर् दिवसश् च[K.दिवसोऽपि] यस्य।
योगयात्रा-४.२४गघ/ यानेऽरिसैन्यम् उपगच्छति तस्य नाशं म मांसकश्रवणकेष्व्[K.मीमांसकश्रवणकेष्व्] इव तीर्थपुण्यम्॥

योगयात्रा-४.२५कख/ त्रिनिधनतनुसप्तमारिसंस्थाः कुजसितजीवबुधा रविश् च यस्य।
योगयात्रा-४.२५गघ/ खलजनजनितेऽव लोकयात्रा न भवति यस्य चिराय शत्रुसेना॥

योगयात्रा-४.२६कख/ कुजरविजयुतेऽरिभे[K.ऽतिभे] गतानां सुखसहजोपगतिः सितार्कजीवैः।
योगयात्रा-४.२६गघ/ रिपुबलम्[K.परबलम्] उपयाति नाशम् आशु श्रुतम् अधनस्य कुटुम्बचिन्तयैव[K.कुटुम्बचिन्तयेऽव]॥

योगयात्रा-४.२७कख/ लग्नत्रिधर्मारिदशायगेषु सितार्किजीवेन्दुकुजेन्दुजेषु।
योगयात्रा-४.२७गघ/ सार्के बुधे चऽरिबलं विनाशम् आयाति गुह्यं पिशुनेष्व् इवोऽक्तम्॥

योगयात्रा-४.२८कख/ एकान्तरर्क्षे भृगुजात् कुजाद् वा सौम्ये स्थिते सूर्यसुताद् गुरोर् वा।
योगयात्रा-४.२८गघ/ प्रध्वस्यते[K.प्रध्वंसते]ऽरिर् न चिराद् गतस्य वेषाधिको भृत्य इवेऽऽश्वरस्य॥

योगयात्रा-४.२९अ[K.३०अ]/.एकान्तरा यदि गता भवेनेषु षट्सु पृष्ठस्थितस्य[K.पृष्ठस्थितश् च] सुरशत्रुगुरोः[K.सुरशत्रुगुरुः] प्रयाणे।
योगयात्रा-४.२९ब्[K.३०ब्]/.यातस्य नात्र रिपवो प्रहसन्ति वीर्यं विष्णोर् इवोद्धृतगदारथवादपाणेः॥

योगयात्रा-४.३०कख/ निरन्तरम् यदि भवनेषु पञ्चसु ग्रहाः स्थिता दिवसकरेण वर्जिताः।
योगयात्रा-४.३०गघ/ यियासतोर्[K.यियासतो] यदि च भवन्ति पृष्ठतस् तदा परान् बलभिद् इवऽवकृन्तति॥

योगयात्रा-४.३१कख/ बृगुपुत्रमहेन्द्रगुरू गमने सहितौ यदि भं युगपत् त्यजतः।
योगयात्रा-४.३१गघ/ ज्ञगुरू यदि वाऽंशकम् एकगतौ[K.एकम् इतौ] समरे सुरराड्[K.अमरराड्] इव भाति तदा॥

योगयात्रा-४.३२कख/ निस्त्रिंशवक्रोपगते च वक्रे वक्रेण वक्रं नृपतिं[K.नृपतिर्] निहन्यात्।
योगयात्रा-४.३२गघ/ पानप्रसक्तं निशि वा प्रसुप्तं तस्यैऽव चऽस्ते यदि वाऽंशकः स्यात्॥

योगयात्रा-४.३३कख/ पुत्रो धरित्र्या दिनकृत् सुतश् च यदा त्यजेतां युगपन् नवांशम्।
योगयात्रा-४.३३गघ/ तदा ह्य् अवस्कन्दगतो नरेन्द्रो भुङ्क्ते रिपून् ताक्ष्र्य इव द्विजिह्वान्॥

योगयात्रा-४.३४कख/ बुधभार्गवमध्यगते हिमगौ हिबुकोपगते च नृपः प्रविशन्[K.प्रवसन्]।
योगयात्रा-४.३४गघ/ पुरुहूतदिशं यदि वाऽन्तकृतः पुरुहूतयमप्रतिमो भवति॥

योगयात्रा-४.३५कख/ सितेन्दुजौ चतुर्थगौ निशाकरश् च सप्तमे।
योगयात्रा-४.३५गघ/ यदा तदा गतो नृपः प्रशास्त्य् अरीन् विना रणान्[K.रणात्]॥

योगयात्रा-४.३६कख/ शशिनि चतुर्थगृहं समुपेते बुधसहितेऽस्तगते भृगुपुत्रे।
योगयात्रा-४.३६गघ/ गमनम् अवाप्य पतिर् मनुजानां जयति रिपून् समरेण विनैऽव॥

योगयात्रा-४.३७कख/ क्षितितनययुतान् नवांशकाद् यदि शतमे[K.शतगो] भृगुजोऽथवा गुरुः।
योगयात्रा-४.३७गघ/ शतगुणम् अपि हन्त्य् अरेर् बलं विषम् इव कायम् असृक्पथोपपन्नम्[K.असृक्पथोपगम्]॥

योगयात्रा-४.३८कख/ शतांशकाद् ऊर्ध्वम् अवस्थिते बुधे यमारयोस् तत्र गतस्य भूभृतः।
योगयात्रा-४.३८गघ/ प्रयाति नाशं समरे द्विषड् बलं यथाऽर्थिभावोपगतस्य गौरवम्॥

योगयात्रा-४.३९कख/ नक्षत्रम् एकं युगपत् प्रविष्टौ यदा धरित्रीतनयामरेज्यौ।
योगयात्रा-४.३९गघ/ कुर्यात् तदाऽन्तं द्विषतां बलस्य द्रौणिर् यथाऽरेर् निशि सौप्तिकेन॥

योगयात्रा-४.४०कख/ ऋक्षं गुरुज्ञौ बुधभार्ग्वौ वा यदा प्रविष्टौ युगपत् समेतौ।
योगयात्रा-४.४०गघ/ अर्थान् अवाप्नोति तदा विचित्रान् छात्रः सुतीर्थान्[K.सुतीर्थाद्] गुरुपूजयैव[K.गुरुपूजयेऽव]॥

योगयात्रा-४.४१कख/ यात्रादिगीशाद् यदि पञ्चमेऽन्यो गृहे ग्रहो वीर्ययुतोऽवतिष्ठेत्।
योगयात्रा-४.४१गघ/ समुद्यताशाकथितानि भङ्क्त्वा फलानि वीर्यान् नयति स्वकाष्ठाम्॥

योगयात्रा-४.४२कख/ एकोऽपि जीवज्ञसितासितानां कुजात् त्रिकोणे रवितोऽथ वेऽन्दुः।
योगयात्रा-४.४२गघ/ यत्रोऽद्यतस् तत्र न याति याता तयोर् बलीयान् नयति स्वकाष्ठाम्॥

योगयात्रा-४.४३कख/ जन्मोदयर्क्षं हिबुकास्तसंस्थं यस्यऽशुभैर् दृष्टयुतं न सौम्यैः।
योगयात्रा-४.४३गघ/ स शाण्डिलीं प्राप्य यथा गरुत्मान् दन्यं[K.दैन्यं] गतोऽभ्येति हतस्वपक्षः॥

योगयात्रा-४.४४कख/ होराष्टमे जन्मगृहाष्टमे वा स्वाच् छत्रुभाच् छत्रुगृहोदये वा।
योगयात्रा-४.४४गघ/ तद्राशिपैर् वा गमनं विलग्ने तुल्यं नराणां विषभक्षणेन॥

योगयात्रा-४.४५क/ रिपुनिधनविलग्ने स्वात् त्रिषड्लाभगे वा

योगयात्रा-४.४५ख/ बलवति भवनेशे स्वे कृशे शत्रुपक्षे।
योगयात्रा-४.४५ग/ अनभिमुखदिगीशे दिक्पतौ सुस्थिते च

योगयात्रा-४.४५घ/ व्रजति यदि यथेष्टं प्राप्नुयात् तत्र यता॥

योगयात्रा-४.४६कख/ केन्द्रत्रिकोणेषु शुभाः प्रशस्तास् तेष्व् एव पापा न शुभप्रदाः स्युः।
योगयात्रा-४.४६गघ/ पपोऽपि कामं बलवन् नियोज्यः केन्द्रेषु शून्यं न शिवाय केन्द्रम्[K.लग्नम्]॥

योगयात्रा-४.४७कख/ सौम्यैश् च पापैश् च चतुष्टयस्थः कृच्छ्रेण सिद्धिं समुपैति याता।
योगयात्रा-४.४७गघ/ प्रपातपातप्रतिघातवक्रैर्[K.प्रपातयानप्रतिघातवक्रा] नदीऽव धात्रीधरकन्दरेषु॥

योगयात्रा-४.४८कख/ गुरो[K.गुरौ] विलग्ने भृगुजेऽरिसंस्थे चन्द्रेऽष्टमे हन्ति गतोऽरिसेनाम्।
योगयात्रा-४.४८गघ/ विष्टं[K.वृष्टिं] यथा दक्षिणमार्गचारी रूक्षो अथवा[K.यदा] ह्रस्वतनुश् च शुक्रः॥

योगयात्रा-४.४९कख/ सिंहाजतौलिमिथुना[K.सिंहाजतौलिमिथुनं] मृगकर्कटौ च स्वेशान्विता यदि भवति[K.भवति] यस्य शनिश् च लग्ने।
योगयात्रा-४.४९गघ/ तत्सैनिकाः परबलं क्सपयन्ति यातुर् मूर्खस्य वित्तम् इव चारणचाटुकाराः[K.चारणचाटचक्षाः(?)]॥

योगयात्रा-४.५०कख/ उदये गुरुसौम्यभार्गवैः सहजेऽर्कार्किकुजैश् च गच्छतः।
योगयात्रा-४.५०गघ/ न भवन्त्य् अरयो रणे स्थिराः कितवानाम् इव वित्तसंचयाः॥

योगयात्रा-४.५१कख/ जातकोक्तनृपयोगगतानाम् प्रत्यहं[K.प्रतिदिनम्] भवति राज्यविवृद्धिः।
योगयात्रा-४.५१गघ/ वातघूर्णितम् इवऽर्णवयानम् परबलं हि समुपैति विनाशम्॥

योगयात्रा-४.५२कख/ होराऽऽश्रिते[K.होराश्रिते] देवगुरौ प्रयाता क्रूरग्रहैः कर्मणि लाभगैर् वा। योगयात्रा-४.५२गघ/ कृत्वा रिपूणां क्षयम् अक्षताङ्गः स्वयं[K.क्षयं] क्षितीशोऽक्षयकोशम् एति[K.ऽक्षयकोश ऐति]॥

योगयात्रा-४.५३कख/ लाभार्थलग्नेषु शुभा रविः खे यस्यऽऽरसौरौ सहजेऽरिभे वा। योगयात्रा-४.५३गघ/ तस्यऽर्थकोशः समुपैति वृद्धिं लाभो[K.लोभो] यथा प्रत्यहम् अर्थवृद्ध्या॥

योगयात्रा-४.५४कख/ स्वोच्चपगैर् जीवकुजार्कजार्कैर् एभ्यस् त्रिभिर् वा कथितैकलग्ने।
योगयात्रा-४.५४गघ/ राज्ञः प्रणाशं समुपैति शत्रुः सौख्यं द्विभार्यस्य यथाऽधनस्य॥

योगयात्रा-४.५५कख/ एकोऽपि जीवार्ककुजार्कजानां स्वोच्चे विलग्ने स्वगृहे यदीऽन्दुः।
योगयात्रा-४.५५गघ/ जातस्य[K.यातस्य] यान्त्य् अत्र पराः प्रणाशम् महाकुलानीऽव कुटुम्बभेदैः॥

योगयात्रा-४.५६कख/ लग्नाच् चतुर्थे अतिबले शशाङ्के[K.विबलः शशाङ्कः] योगाद् विना चन्द्रबलेन याता[K.यातः]।
योगयात्रा-४.५६गघ/ लब्धाऽपि लक्ष्मीं बहुरत्नपूर्णा[K.लक्ष्मीर् बहुरत्नपूर्णा] क्षिप्रं क्षयं याति यथा शशाङ्कः॥

योगयात्रा-४.५७कख/ येषां गमे नवमपञ्चमकण्टकस्थाः सौम्यास् तृतीयरिपुलाभगताश् च पापाः।
योगयात्रा-४.५७गघ/ आयान्ति ते स्वभवनानि पुनः कृतार्था दत्ता द्विजातिषु पुरा विधिवद् यथार्थाः॥

सञ्चिका:उदाहरण.jpg== मिश्रकाध्याय == योगयात्रा-५.१कख/ पूर्वादितस् त्रिपरिवर्तगतैर् अजाद्यैर् भैः सप्तकैर् अनलभाच् च गमो जयाय।
योगयात्रा-५.१गघ/ वायुअग्निदिक्स्थपरिघस्य समार्द्धगैश् च मैत्राश्विहस्तगुरुभेषु च सर्वदिक्षु॥

योगयात्रा-५.२कख/ पूर्वेणाइन्द्रं[K.पूर्वेणाइऽऽन्द्रं] दक्षिणेनऽऽजपादं रोहिण्योऽतश् चऽर्यमाख्यं च शूलम्।
योगयात्रा-५.२गघ/ कामं यायात् साम्परायेषु कार्येष्व् एवं द्वारे[K.अद्वारेऽपि] प्रोज्झ्य शूलानि तानि॥

योगयात्रा-५.३कख/ विवर्जयेत् त्वाष्ट्रयमोरगाणाम् अर्धम् द्वितीयं गमने जयेप्सुः।
योगयात्रा-५.३गघ/ पूर्वार्धम् आग्नेयमघानिलानां स्वातीम्[K.स्वातिम्] मघां चोऽशनसः समस्ताम्॥

योगयात्रा-५.४कख/ उत्पातपापग्रहपीडिते भे ये यान्ति भूरिग्रहसंयुते वा।
योगयात्रा-५.४गघ/ ते पूर्ववित्तान्य् अपि नाशयन्ति धातुप्रसक्ता इव मूर्त्तिकेन्द्राः[K.वार्तिकेन्द्राः]॥

योगयात्रा-५.५कख/ रविसितकुजराहुसौरिचन्द्रा[K.रविसितकुजराहुसौरचन्द्रा] ज्ञगुरुयुताः पुरतः क्रमाद् दिगीशाः।
योगयात्रा-५.५गघ/ व्रजति यदि ललाटगे दिगीशे पतति ततो द्रुमवत् सरित्तटात्सः[K.सरित्तटस्थः]॥

योगयात्रा-५.६कख/ यातोऽयनस्य प्रतिलोमकाष्ठां यः स्यात् स्वतन्त्रो[K.सुतन्त्रो]ऽपि जितः परेषां।
योगयात्रा-५.६गघ/ स केवलव्याकरणाभियुक्तः[K.केवलं] व्याकरणाभियुक्तः काव्यज्ञगोष्ठ्याम् इव हास्यम् एति॥

योगयात्रा-५.७कख/ अयनेन गतोऽर्कसोमयोर् द्युनिशं वा स्थितयोः पृथक् पृथक्।
योगयात्रा-५.७गघ/ विदुषाम् इव सर्वशास्त्रवित्[K.शब्दशास्त्रवित्] समवाये द्विषतां विराजते॥

योगयात्रा-५.८कख/ तिथिं चतुर्थीं नवमीं चतुर्दशीं विहाय विष्टिं करणं च गच्छतः।
योगयात्रा-५.८गघ/ भवन्ति चामीकरवाजिवारणाश् चतुर्थिपूर्वाश् च तदाप्तिवारणाः॥

योगयात्रा-५.९कख/ ऋक्षे[K.रिक्ते] तिथौ वा व्यतिपातदुष्टे यो याति मोहात् खलु वैधृते वा।
योगयात्रा-५.९गघ/ स नाशम् आयात्य् अचिरेण याता[K.राजा] राजेऽव दैवज्ञविलोमचेष्टः॥

योगयात्रा-५.१०कख/ आरोग्यम् ऋक्षेण धनं क्षणेन कार्यस्य सिद्धिस् तिथिना शुभेन।
योगयात्रा-५.१०गघ/ राश्युद्गमेनऽध्वनि सिद्धिम् आहुः प्रायः शुभानि[K.सुखानि] क्षणदाकरेण॥

योगयात्रा-५.११अब[K.ओमित्तेद्]/.न राजते भूरिगुणान्विताऽपि व्यहर्तब्ययस्य क्षितिपस्य यात्रा।
योगयात्रा-५.११च्द्[K.ओमित्तेद्]/.शुक्रे प्रणष्टे धनदर्पितस्य विवाहयात्रेव जरार्द्दितस्य॥

योगयात्रा-५.१२कख/ प्रतिशुक्रबुधाशनिवृष्टिहता दिग् अधः कुरुते नृपतिं गमने।
योगयात्रा-५.१२गघ/ मदिरामुदिता मदनाकुलिता प्रमदेऽव कुलम् परवेश्मरता॥

योगयात्रा-५.१३कख/ वीर्यान्वितैर् यायिभिर् आत्मभद्रैः क्लेशं[K.क्लेशेद्] विना हन्ति चमूम् अरीणाम्।
योगयात्रा-५.१३गघ/ त्रैलोक्यलाभेऽप्य् असमाप्तकार्यां तृष्णां यथा चीरफलाम्बुतुष्टः॥

योगयात्रा-५.१४कख/ सर्पिस् तिलौदनषैः[K.तिलोदनझषैः] पयसा च भुक्त्वा पूर्वादि वारणरथाश्वनरैर् गतस्य।
योगयात्रा-५.१४गघ/ सोढुम् प्रतापम् अरयो न ऌपस्य शक्ता गन्धद्विपस्य कलभा इव गन्धदानम्[K.दानगन्धम्]॥

योगयात्रा-५.१५कख/ एकतश् च सकलानि निमित्तान्य् एकतश् च मनसः परिशुद्धिः।
योगयात्रा-५.१५गघ/ चेतसोऽस्ति[K.ऽपि] सहसा न[K.ऽस्ति] रणे भीर् मारुतोऽपि विजयाजयहेतुः॥

योगयात्रा-५.१६कख/ भूरिशूरवरवाजिकुञ्जरा ज्ञातयुद्धगतयोऽभिमानिनः।
योगयात्रा-५.१६गघ/ क्वऽपि यान्ति घनतूलराशिवन् मारुताभिहतवक्षसोऽरयः॥

योगयात्रा-५.१७कख/ अनुलोमगते[K.अनुलोमगतौ] प्रदक्षिणे सुरभौ देहसुखेऽनिले गतः।
योगयात्रा-५.१७गघ/ तिमिराणि गभस्तिमान् इव प्रसभं हन्ति बलानि विद्विषाम्॥

योगयात्रा-५.१८कख/ उपपत्तिर् अयत्नतो यदा तृणपानाशनरत्नवाससाम्॥

योगयात्रा-५.१८गघ/ प्रमदाक्षितिनागवाजिनां विजयद्वारम् अपावृतं तदा॥

योगयात्रा-५.१९कख/ लग्नस्य येऽंशा ह्य् उदिता[K.उदिता] ग्रहो यस् तेषु स्थितो लग्नफलं स धत्ते।
योगयात्रा-५.१९गघ/ यस् तान् अतीतः स भवेद् द्वितीयः स्थानेषु शेषेष्व् अपि चिन्त्यम् एतत्[K.चिन्तनीयम्]॥

योगयात्रा-५.२०कख/ गतोऽनुकूलैर् ग्रहभाग्निमारुतैर् मनोऽब्दविद्युत्स्वनवृष्टिकार्मुकैः।
योगयात्रा-५.२०गघ/ रिपोः प्रमथ्नाति रणाजिरे चमूं द्विपः समूलां सरसीऽव पद्मिनीम्॥

योगयात्रा-५.२१कख/ दैवेन हीनः परभीषणार्थं यातोऽतिकृच्छ्रेण नयत्य् अहानि।
योगयात्रा-५.२१गघ/ स्वशक्त्यतीतो नृपवेश्मनीऽव कृत्वा प्रतिज्ञाम् प्रतिवादिभीतः॥

योगयात्रा-५.२२कख/ दैवान्वितः साधुजनोपकारी प्रभावमन्त्रोद्यमशक्तियुक्तः।
योगयात्रा-५.२२गघ/ भुङ्क्ते महीं सम्यग् अवाप्य यात्रां ससह्यविन्द्याचलपारियात्राम्॥

योगयात्रा-५.२३कख/ गोचरेण शुभदः शशी न चेद् अष्टवर्गपरिशोधितोऽपि[Kऽथ] वा।
योगयात्रा-५.२३गघ/ पूर्ववायुर् इव पुष्पकालजो यायिनाम् फलविनाशकृद् भवेत्॥

योगयात्रा-५.२४कख/ आश्रित्य चन्द्रस्य बलाबलानि ग्रहाः प्रयच्छन्ति शुभाशुभानि।
योगयात्रा-५.२४गघ/ मनःसमेतानि यथेन्द्रियाणि कर्मार्हतां[K.कर्मण्यतां] यान्ति न केवलानि॥

योगयात्रा-५.२५कख/ सर्वतः क्षुतम् अशोभनम् उक्तं गोः क्षुतं[K.गोक्षुतम्] मरणं एव करोति।
योगयात्रा-५.२५गघ/ केचिद् आहुर् अफलं बकाद् च[K.हि बलाद्] यद् वृद्धपीनसितबालाकृतं च॥

योगयात्रा-५.२६कख/ शकुनतिथिभलाभे छत्त्रशय्यासनाद्यं पदम् अपि विजिगीषुश् चालयेच् छ्रदधानः[K.छ्रद्धधानः]।
योगयात्रा-५.२६गघ/ यदि शकुननिमित्तस्वप्नचेतोविशुद्धिर्[K.शकुननिमित्तेऽस्य स्वचेतोविशुद्धिर्] न भवति तद् अनिष्टं सर्वकार्येषु यानम्॥

योगयात्रा-५.२७कख/ दिनकृद्दिवसे तथाऽंशके यात्रा लग्नगतेऽथवा रवौ।
योगयात्रा-५.२७गघ/ संतापायति स्मरातुरा[K.स्मरातुरं] वेश्येऽवाऽर्थविवर्जितं नरम्॥

योगयात्रा-५.२८कख/ उदये शशिनोऽंशकेऽह्नि वा भवति गतो न चिरेण दुर्मनाः॥

योगयात्रा-५.२८गघ/ प्रमदाम् इव जातयौवनां[K.यातयौवनां] रत्यर्थं समवाप्य कर्कशः॥

योगयात्रा-५.२९कख/ भौमोदयेऽंशेऽहनि वाऽस्य यात्रा करोति बन्धं वधम् अर्थनाशम्।
योगयात्रा-५.२९गघ/ संसेविताऽपापपराङ्मुखेन मनोभवान्धेन पराङ्गनेऽव॥

योगयात्रा-५.३०कख/ बुधस्य लग्नांशकवासरेषु यात्रा नरं प्रीणयति प्रकामम्।
योगयात्रा-५.३०गघ/ भावानुरक्ता प्रवराङ्गनेऽव विदग्धचेष्टा मदनाभितप्तम्[K.मदनाभिभूतम्]॥

योगयात्रा-५.३१कख/ गुरोर् विलग्नांशदिनेषु यात्रा शुभानु[K.हितानु]बन्धेप्सितकामदा च/(Bॠ ५.३१--३३)

योगयात्रा-५.३१गघ/ जायेऽव भर्तुर् मनसोऽनुकूला कुलाभिवृद्ध्यै रतिदा हिता च॥

योगयात्रा-५.३२कख/ यात्रा भृगोर् अंशदिनोदयेषु प्रीणाति कामैर् विविधैर् यियासुम्॥

योगयात्रा-५.३२गघ/ विलासिनी कामवशोपयातम् भावैर् अनेकैर् मदनातुरेऽव॥

योगयात्रा-५.३३कख/ द्युलग्नभागेषु शनेश् च यात्रा प्राणच्छिदादीन् प्रचिनोति[K.प्रतनोति] दोषान्।
योगयात्रा-५.३३गघ/ अन्यप्रसक्ता वनितेऽव मोहात् संषेविता[K.मोहान् निषेविता] मन्मथमोहितेन॥

योगयात्रा-५.३४कख/ लग्नेन हीनाऽन्यगुणान्वितापि प्रीतिं न यात्रा मनसः करोति।
योगयात्रा-५.३४गघ/ स्वलङ्कृता रूपसमन्विताऽपि प्रभ्रष्टशीला वनितेऽव पुंसः॥

योगयात्रा-५.३५कख/ लग्नस्य शुद्धिः शकुनैर् निमित्तैर् विज्ञायतेऽन्तःकरणेन सम्यक्।
योगयात्रा-५.३५गघ/ अनन्यभावाश्रयसंप्रवृत्तैः कौलीऽव पुंसश् चरितैर् विदेशे॥

योगयात्रा-५.३६कख/ छाया शुभाशुभफलानि निवेदयन्ती लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः।
योगयात्रा-५.३६गघ/ तेजोगुणान् बहिर् अपि प्रविकाशयन्ती दीपप्रभा स्फटिकरत्नघटस्थितैव[K.स्फटिकरत्नघटस्थितेऽव]॥

योगयात्रा-५.३७कख/ स्निघद्विजत्वङ्नखरोमकेशा छाया सुगन्धा च महीसमुत्था।
योगयात्रा-५.३७गघ/ तुष्ट्यर्थलाभाभिउदयान् करोति धर्मस्य चऽहन्य् अहनि प्रवृद्धिम्॥

योगयात्रा-५.३८कख/ स्निग्धा सिता च हरिता नयनाभिरामा सौभाग्यमार्दवसुखाभ्युदयान् करोति।
योगयात्रा-५.३८गघ/ सर्वार्थसिद्धिजननी जननीऽव चाप्या[K.ऽऽप्या] छाया फलं तनुभृतां शुभम् आदधाति॥

योगयात्रा-५.३९कख/ चण्डाऽधृष्या पद्महेमाग्निवर्णा युक्ता तेजोविक्रमैः सप्रतापैः।
योगयात्रा-५.३९गघ/ आग्नेयीऽति प्राणिनां स्याज् जयाय क्षिप्रं सिद्धिं वाञ्छितार्थस्य धत्ते॥

योगयात्रा-५.४०कख/ मलिनपरुषकृष्णा पापगन्धाऽनिलोत्था जनयति वधबन्धव्याध्यनर्थार्थनाशान्।
योगयात्रा-५.४०गघ/ स्फटिकसदृशरूपा भाग्ययुक्ताऽत्युदारा निधिर् इव गगनोत्था श्रेयसां स्वच्छवर्णा//E४०

# बल्युपहाराध्याये

योगयात्रा-६.१कख/ पुरुहूतहुताशयमा निरृतिर् वरुणानिलयक्षशिवाश् च दिशाम्।
योगयात्रा-६.१गघ/ पुनर् अर्कसितारतमोरविजाः शशिसौम्यबृहस्पतयः पतयः॥

योगयात्रा-६.२कख/ शच्या सहैरावणगः सवज्रो हैमोऽथवा दारुमयो महेन्द्रः।
योगयात्रा-६.२गघ/ विचित्रमाल्यध्वजरक्तचन्दनैः सौम्योपहारेण च पूजनीयः॥

योगयात्रा-६.३कख/ अथ मन्त्रम्[K.मन्त्र:] इति जप्त्वा पुरतः प्रन्दरस्य।
योगयात्रा-६.३गघ/ पुरुहूतदिशं नृपोऽभियुञ्ज्यात् पुरुहूतं हृदये निवेश्य सम्यक्॥

योगयात्रा-६.४कख/ ताम्रजा प्रतिकृतिः सहस्रगो रक्तचन्दनकृतानुलेपना।
योगयात्रा-६.४गघ/ रक्तवस्त्रकुसुमध्वजार्चिता[K.ध्वजाचिता] सूर्यकान्तमणिभिर् विभूषिता॥

योगयात्रा-६.५कख/ <आ कृष्ण> पूर्वं यदिवाऽप्य् मन्त्रं समावर्त्य रवेः पुरस्तात्।
योगयात्रा-६.५गघ/ क्षीरौदनेन प्रतिपूज्य यायात् प्राचीम् पुरस्कृत्य दिनेशशक्रौ॥

योगयात्रा-६.६कख/ अग्नेस् तनुः कनकेनैव कार्या रक्तआ[K.रक्तं] ध्वजं कुसुमं चन्दनं च।
योगयात्रा-६.६गघ/ आज्यम् बलिर् हुतभुग्विजिगीषोर्[K.हुतभुग्दिग्जिगीषोर्] मन्त्रो[K.मन्त्रं] पिबेति[K.पठेच् च]॥

योगयात्रा-६.७कख/ कार्यश् चित्रो दितिसुतगुरुर् वामयोर्षाद्धकायो[K.यमो वाऽर्धकायो] नानारूपाः कुसुमभलयस् तस्य चित्रो ध्वजश् च।
योगयात्रा-६.७गघ/ <शुक्रज्योतिः> प्रभृति च जपेन्[K.पठेन्] मन्त्रम् अस्यऽग्रतस् तौ कृत्वा यायाद् भृगुजदहनौ जेतुम् इच्छुस्[K.इच्छंस्] तद् आशाम्॥

योगयात्रा-६.८कख/ अयोमयम् प्रोद्यतदण्डहस्तं यमं सकृष्णध्वजपुष्पगन्धम्[K.सकृष्ण-.ध्वज-.पुष्प-.गन्धैः]।
योगयात्रा-६.८गघ/ तिलौदनैर्[K.तिलोदनैर्] अर्च्य समांसमद्यैर् च जपोऽस्य कार्यः॥

योगयात्रा-६.९कख/ मूर्त्तिः स्याद् रुधिराख्यसंज्ञमणिना[K.रुधिराक्षसंज्ञमणिना] भौमस्य रक्ताः स्रजो रक्तानि ध्वजचन्दनानि कुसुमैः पक्वान्नमांसैर् बलिः।
योगयात्रा-६.९गघ/ पदैः स्तुतिः क्षितिसुतस्यैवं यमाङ्गारकौ दिङ्नाथौ गमनेऽग्रतो नरपतिः कृत्वा व्रजेद् दक्षिणम्[K.दक्षिणाम्]॥

योगयात्रा-६.१०कख/ भैरवाप्रतिकृतिः पटे कृता सर्वगन्ध[K.पुष्प]फलपुष्प[K.धूप]पूजिता।
योगयात्रा-६.१०गघ/ निरृतिमन्त्रचोदना कृष्णरक्तकुसुमध्वजाम्बरा॥

योगयात्रा-६.११कख/ सुरदारुमयः शशाङ्कशत्रुः कुसुमाद्यैर् असितैः कृतोपहारः।
योगयात्रा-६.११गघ/ निरृतिसहितः[K.निरृतेर् महितः] स्वदिक्प्रयाणे स्तुतिमन्त्रोऽस्य च कीर्तितः ॥

योगयात्रा-६.१२कख/ पश्चाद् व्रजेद् रजतमयं जलेश्वरं पाशान्वितम् सह गदयाऽब्जपूजितम्।
योगयात्रा-६.१२गघ/ कृत्वौदनैर् बलिम् अपि यावाकान्वितं[K.यावाकाचितं] वरुण[K.वरुणं] इति स्तुयाद् द्विजः॥

योगयात्रा-६.१३कख/ सौरेर् अर्चा नीलकाचा ऋशाङ्गी पूज्या कृष्णैर् वस्त्रमाल्योपहारैः।
योगयात्रा-६.१३गघ/ <शं नो देवी>ऽत्य् एष मन्त्रोऽपराशां जेतुं यायात् तौ पुरस्कृत्य देवौ॥

योगयात्रा-६.१४कख/ वायोर् मूर्त्तिः श्वेतमृद्भिर् विधेया पूज्या श्वेतैः पुष्पवस्त्रध्वजाद्यैः।
योगयात्रा-६.१४गघ/ मन्त्रोऽति जाप्यो वायव्याशाम् प्रस्थितस्येऽऽश्वरस्य॥

योगयात्रा-६.१५कख/ मन्त्रः सोमस्या <ऽऽप्यायस्वे>ऽत्य् अन्यच् छ्वेतं स्रग्वस्त्राद्यम्।
योगयात्रा-६.१५गघ/ वायुं सोमं चऽग्रे कृत्वा यायाद् राजा वायोः काष्ठाम्॥

योगयात्रा-६.१६कख/ हाटकमूर्तिं[K.हाटकीम् मूर्तिं] कुर्याद् धनदस्य विभूषितां[K.भूषितां] रत्नैः सगदात् च[K.सर्वैः सगदां च]।
योगयात्रा-६.१६गघ/ पूजितां स्रग्वस्त्राद्यैश् च विचित्रैऽत्य् एष हि मन्त्रः॥

योगयात्रा-६.१७कख/ सौवर्णं रजतासने नृमिथुनं चन्द्रात्मजस्येष्यते हारिद्रौदन-.मिष्ट-.गन्ध-.कुसुमैर् गन्धैश् च संपूजितम्[K.तत् पूजितम्]।
योगयात्रा-६.१७गघ/ जपश् च तस्य कथितः स्याद् ब्रह्मयज्ञेति च[K.ब्रह्मयज्ञादिना] गच्छेद् उत्तरतो धनेश्वरबुधौ ध्यायन् पुरस्कृत्य च॥

योगयात्रा-६.१८कख/ गोत्वग्जाप्यति भैरवा[K.गोत्वग्जा प्रतिभैरवा] प्रतिकृतिर् भस्मोत्कटा शूलिनो दध्ना चोदनषंयुतेन च[K.ओमित्तेद्] बलिर्[K.बलिभिर्] मन्त्रो ।
योगयात्रा-६.१८गघ/ मूर्त्तिः स्यान् मणितो गुरोर् विमलिका[K.विमलकात्] पीतं तु वस्त्रादिकं[K.वस्त्रादि यन्] मन्त्रश् चऽस्य इति तयोर् यायाद्

दिशम् पूज्य तौ॥

योगयात्रा-६.१९कख/ दिङ्नाथं कुलदेवतां स्वनगरे येषां कृताच् चऽऽलयास् तान् सम्पूज्य यथानुरूप-.बलिभिर् दद्याद् बलिम् भौतिकीम्[K.भौतिकम्]।
योगयात्रा-६.१९गघ/ कृत्वा पायसमद्यमांसपललैर् भक्ष्यैश् च नानाविधैर् बालकृईडनकैः सुगन्धकुसुमैर्[K.सुगन्धिकुसुमैर्] मूलैः फलैः स्वादुभिः॥

योगयात्रा-६.२०कख/ रथ्यापुरद्वारनदीतटेषु चतुष्पथाट्टालकनिःकुटेषु।
योगयात्रा-६.२०गघ/ गुहैकवृक्षादिषु ये वसन्ति ते पूजनीयाः प्रमथा यथावत्॥

योगयात्रा-६.२१कख/

योगयात्रा-६.२१गघ/ कुबेररुद्राहिसुपर्णशक्तिभृत्पिशाचदैत्यानुचराश् च ये गणाः>॥

योगयात्रा-६.२२कख/

योगयात्रा-६.२२गघ/ पवनसदृशवेगा मानिनो नित्यहृष्टास् तरुणदिनकरत्विट्स्पर्धितेजोदधाणाः>॥

योगयात्रा-६.२३कख/

योगयात्रा-६.२३गघ/ नानापक्षिव्यालोष्ट्रास्या वक्त्रैर् हीनाः क्रोडास्याश् च>॥

योगयात्रा-६.२४कख/

योगयात्रा-६.२४गघ/ विकटा मुकुटोत्कटरत्नभृतस् तरुणार्कतडिद्धुतभुक्कपिलाः>॥

योगयात्रा-६.२५कख/

योगयात्रा-६.२५गघ/ अशनिनिपातस्वनसनिनादा[K.मनादा] द्रुतगमने च स्व[K.श्व]सनमनोगाः>॥

योगयात्रा-६.२६कख/

योगयात्रा-६.२६गघ/ कणय[K.कणप]परिघकुन्तमुष्टिमाया लगुडकुठारशतघ्नीधारिणश् च>॥

योगयात्रा-६.२७कख/

योगयात्रा-६.२७गघ/ जित्वाऽरीन् द्विगुणम् अतो बलिं विचित्रं दास्यामः स्वविषयम् एत्य वः प्रसादात्>॥

योगयात्रा-६.२८कख/

योगयात्रा-६.२८गघ/ रक्षार्थम् मनुजपतेः सहायकृत्यं क्रुवीध्वं रिपुबलसंक्षयाय चऽस्य>॥

योगयात्रा-६.२९कख/

योगयात्रा-६.२९गघ/ एवं भवत्य् उपकृतं सुमहद् भवद्भिः कार्यं करिष्यति यथा भवतां प्रसादात्>//E२९

# नक्षत्रविजयस्नानप्राशन्

योगयात्रा-७.१कख/ मदयन्तिकाऽश्वगन्धा मदनफलवचामधूनि शस्यन्ते।
योगयात्रा-७.१गघ/ प्रथमर्क्षे भरणीषु च[K.(तु)] सिद्धार्थकभद्रदारुवचाः॥

योगयात्रा-७.२कख/ न्यग्रोधशिरीषाश्वत्थपत्रगन्धाश् च कृत्तिकास्नाने।
योगयात्रा-७.२गघ/ बहुबीजप्रशस्ततोयैर् जयार्थिनो रोहिणीस्नानम्॥

योगयात्रा-७.३कख/ मुक्ताकाञ्चनमणिसंयुक्तेनऽम्भसा मृइगाङ्कर्क्षे।
योगयात्रा-७.३गघ/ रौद्रे वचाश्वगन्धाप्रियंगुमिश्रैर् जलैः कथितम्॥

योगयात्रा-७.४कख/ आदित्ये गोमयगोष्ठमृद्भिर् अथ गौरशालिभिः पुष्ये।
योगयात्रा-७.४गघ/ सिद्धार्थसहस्रद्वय[K.सिद्धार्थद्विसहस्रैः]प्रियंगुमदयन्तिकाभिश् च॥

योगयात्रा-७.५कख/ वल्मीकशतान् मृद्भिः नागे[K.सार्पे] पित्र्ये च देवनिर्माल्यैः।
योगयात्रा-७.५गघ/ पूर्वासु फल्गुनीषु च सलवणघृतशाड्वलैः प्रोक्तम्॥

योगयात्रा-७.६कख/ शतपुष्पया प्रियंग्वा मुस्ताभिश् चोत्तरासु कुर्वीत।
योगयात्रा-७.६गघ/ हस्ते सरोगिरिमृदा चित्रायां देवनिर्माल्यैः॥

योगयात्रा-७.७कख/ स्वातौ जलरुहकुसुमैर् ऐन्द्राग्न्ये[K.ऐन्द्राग्ने] मत्स्य[K.मुस्त]पद्मकक्षौद्रैः।
योगयात्रा-७.७गघ/ मैत्रे सरिदुभयमृदा हरितालमृदा च माहेन्द्रे॥

योगयात्रा-७.८कख/ भद्रासने शमीमयपत्रसहस्रद्वयाम्बुभिर् मूले॥

योगयात्रा-७.८गघ/ समधूकपद्ममत्स्यैः स्नानम् अषाढासु पूर्वासु॥

योगयात्रा-७.९कख/ कुर्याद् उशीरचन्दनपद्मकमिश्रेण वारिणा वैश्वे।
योगयात्रा-७.९गघ/ नद्युभयकूलसंगममृत्कनकैः कीर्त्यते श्रवणे॥

योगयात्रा-७.१०कख/ घृतभद्रदारुमधुभिश् च वासवे वारुने घृतक्षौद्रैः।
योगयात्रा-७.१०गघ/ समदनफल[K.समदनफलैः]सहदेवाम्बुशूकमदयन्तिकामिश्रैः॥

योगयात्रा-७.११कख/ श्रीवासकः प्रियंगुश् चऽऽजे स्याद् उत्तरास्व् अगुरुगन्धाः।
योगयात्रा-७.११गघ/ शस्ताः सपद्मकोशीरचन्दना मानवेन्द्राणाम्॥

योगयात्रा-७.१२कख/ रेवत्यां वृषभद्विपविषाणकोशैः च सर्पिमधुपूर्णैः[K.ससर्पिमधुपूर्णैः]।
योगयात्रा-७.१२गघ/ गोरोचनाञ्जनयुतैः सलिलैश् च यियासतः पुंसः[K.यियासताम् पुंसाम्]॥

योगयात्रा-७.१३कख/ गिरिवल्मीकनदीमुखकूलद्वयशक्रपादमृद्भिर् अतः।
योगयात्रा-७.१३गघ/ द्विपवृषविषाणपार्थिवगणिकाद्वाराहृताभिश् च॥

योगयात्रा-७.१४कख/ गिरिशिखरान् मूर्धानं वल्मीकमृदा च शोधयेत्[K.शोचयेत्] कर्णौ।
योगयात्रा-७.१४गघ/ नद्युभयकूलसंगममृद्भिः प्रक्षालयेत् पार्श्वे॥

योगयात्रा-७.१५कख/ इन्द्रस्थानाद् ग्रीवां बाहू करिवृषभयोर् विस्हाणात्[K.विस्हाणाग्रात्]।
योगयात्रा-७.१५गघ/ हृदयं च[K.ओमित्तेद्] नृपद्वारात्[K.नृपतिद्वारात्] कटिम् अपि वेश्याघृहद्वारात्॥

योगयात्रा-७.१६कख/ अक्षतमाषाः स्विन्नास्तिलसहितास् तण्दुला दधि च गव्यम्[K.अक्षतमाषा आद्यं तिलसहितस् तण्डुलश् च दधिगव्यम्]।
योगयात्रा-७.१६गघ/ वृषत[K.वृषभ]पिशितं मृगस्य च पञ्चानाम् आश्विनादीनाम्॥योगयात्रा-७.१७कख/ रुधिरविलापनपायसविहग[K.भुजंग]मांसानि शांकरादीनाम्।
योगयात्रा-७.१७गघ/ पित्र्ये तिलौदनं षष्टिकान्नम् ऋक्षद्वये परतः[K.च तत्परतः]॥

योगयात्रा-७.१८कख/ प्राश्याः प्रियंगुचित्राण्डजफलं[K.प्रियंगुचित्राण्डजाः पलं] यावकं कुलत्थाश् च।
योगयात्रा-७.१८गघ/ मधुससर्पिषी[K.मधुसर्पिषी] च हस्तान् मूलान्य् आपः [मूलाम्भः] सक्तवोऽपि[K.ओमित्तेद्] मूलात्॥

योगयात्रा-७.१९कख/ श्रवणादीनां अद्यात्[K.भक्ष्याः] शालिशाकं[K.शालिः शाकं] बिडालमांसं च।
योगयात्रा-७.१९गघ/ आजं यथेष्टमांसं च शक्तवो[K.सुसक्तवो] माषसंपृक्ताः॥

योगयात्रा-७.२०कख/ प्राचीं गजेन यायाद् रथेन याम्यां हयेन वारुण्याम्।
योगयात्रा-७.२०गघ/ नरयानेनोदीचीं सर्वं दत्वा दिगीशाय॥

योगयात्रा-७.२१कख/ प्राच्यादि घृतं तिलौदनं मत्स्याण् क्षीरं इति प्रदक्षिणम्।
योगयात्रा-७.२१गघ/ अद्यान् न्रपतिर् यथादिशं नक्षत्राभिहितं च सिद्धये॥

योगयात्रा-७.२२क/ अस्वादु च्युतमक्षिकानुविद्धं[K.च्युतकचमक्षिकानुविद्धं]

योगयात्रा-७.२२ख/ दुर्गन्धि क्षयकृद् अभूरि यच् च दग्धम्।
योगयात्रा-७.२२ग/ सुस्विन्नं शुचि[K.मृदु] रुचिरं मनोऽनुकूलं

योगयात्रा-७.२२घ/ स्वाद्व् अन्नं बहु विजाय[K.च जयाय] यानकाले//E२२

# अग्निनिमिताध्याय

योगयात्रा-८.१कख/ वेदी शुभा शुल्व[K.शिल्प]विधानदृष्टा दिक्स्थानमानाभ्यिधका[K.दिक्-.स्थान-.मानानधिका] न हीना।
योगयात्रा-८.१गघ/ भ्रष्टप्रमाण[K.भ्रष्टा प्रमाणेन] प्रकरोति[K.करोति] भङ्गं दिग्वक्रसंस्था च न[K.न च] सिद्धिदा स्यात्॥

योगयात्रा-८.२कख/ प्राग्भागहीना नगरस्य नेष्टा पुरोधसां[K.पुरोधसो] दक्षिणभागवक्रा।
योगयात्रा-८.२गघ/ नरेन्द्रजायाशुभदा परस्याम् उदग् बलेशस्य नृपस्य मध्ये॥

योगयात्रा-८.३कख/ सत्त्वैर् अलीढं न पिपीलमक्षिकामलाविलं वा[K.तद्] विजयप्रदं हविः।
योगयात्रा-८.३गघ/ द्रव्याण्य् अनूनानि पटुः पुरोहितो जुहोति सम्यग् विजयाय भूभृताम्॥

योगयात्रा-८.४कख/ गन्धमाल्यचरुकुम्भभाजनस्रुक्कुशव्यजनसर्पिषां यदा।
योगयात्रा-८.४गघ/ भङ्गविस्मृतिनिपातहीनता पार्थिवस्य न भवेत् तदा शुभम्[K.तदा भवेच् छिवम्]॥

योगयात्रा-८.५कख/ शान्तायां दिशि यदि शङ्खतूर्यशब्दाः सप्तीनां प्लुतमिभबृङ्हितानि[K.रुतगजबृंहितानि] वा स्युः।
योगयात्रा-८.५गघ/ पुंसां वा प्रमुदितचेष्टितप्रलापाः श्रूयन्ते यदि च जयोऽस्ति होमकाले॥

योगयात्रा-८.६कख/ अप्रतिरथः समस्तो यात्रालिङ्गस् तथाऽभयश् च[K.ऽभयस्य] गणः।
योगयात्रा-८.६गघ/ स्वस्त्ययनशर्मवर्माऽपराजिताः पुष्पसंज्ञाश् [ऽपराजिताऽऽयुष्यसंज्ञाश्] च॥

योगयात्रा-८.७कख/ इन्द्रश् चन्द्रश् चिति[K.चन्द्रेति] गणो यत्[K.यं] ते चन्द्रश् च भूतभूतेति/छेच्केद्

योगयात्रा-८.७गघ/ सूक्तं महाव्याहृतयो मन्त्राशीर्वैष्णवा[K.सूक्तमहाव्याहृतयः प्राजापत्याश् च ये] मन्त्राः॥

योगयात्रा-८.८कख/ प्राजापत्याश् चोक्ता होमे[K.उक्ताः काले (लचुन) राज्ञो] निर्गच्छतोऽनु गमने च।
योगयात्रा-८.८गघ/ अग्निपुरोहितसंस्थान्य् अतो[K.होमेऽग्निप्रोहितसंस्थानि] निमित्तानि वक्ष्यामि[K.गृह्णीयात्]॥

योगयात्रा-८.९कख/ कृतेऽपि यत्नेऽतिकृशः [ऊ.ऽपि कृZअः] कृशानुर् यातव्यकाष्ठाविमुखो नतार्चिः।
योगयात्रा-८.९गघ/ वामीकृतावर्तशिखो [ऊ.वामे कृतावर्तशिखो]ऽतिधूमो विच्छिन्नसाकम्पविलीनमूर्तिः॥

योगयात्रा-८.१०कख/ शिमशिमायति[K.शिमिशिमायति,ऊ.सिमिसिमायति] यस्य [ऊ.चास्य] हविर् हुतं सुर-.धनुः-.सदृशः कपिशो [ऊ.कपिलो]ऽथवा।
योगयात्रा-८.१०गघ/ रुधिरपीतकबभ्रुहरिच्छविः परुषमूर्त्तिर् अनिष्टकरोऽनलः॥

योगयात्रा-८.११कख/ श्वखरकरभ [ऊ.खरकरभक]वानरानुरूपो निगडविभीषणशस्त्ररूपभृद् वा।
योगयात्रा-८.११गघ/ शवरुधिरवसास्थिवस्त[K.ऊ.मज्ज]गन्धो हुतभुग् अनिष्टफलः स्फुलिङ्गकृच् च॥

योगयात्रा-८.१२कख/ चर्मविपाटनतुल्यनिनादो जर्जरमन्दवि[K.मन्द्रवि,ऊ.दर्दुर]रूक्षरवो वा।
योगयात्रा-८.१२गघ/ आकुलयंश् च पुरोहितसभ्यान् [ऊ.पुरोहितमर्त्यान्] धूमचयैर्[K.ऊ.धूमलवैर्] अशिवाय [ऊ.न शिवाय] हुताशः॥

योगयात्रा-८.१३अब[K.१४अब]/.स्वाहावसानसमये स्वयम् उज्ज्वलार्चिः स्निग्धप्रदक्सिणशिखो[K.स्निग्धः प्रदक्सिणशिखो] हुतभुग् नृपस्य।
योगयात्रा-८.१३च्द[K.१४च्द]/.गङ्गादिवाकरसुताजलचारुहारां धात्रीं समुद्ररसनां वशगां करोति॥

योगयात्रा-८.१४कख/ हारकुन्दकुसुमेन्दु[K.ऊ.कुमुदेन्दु]संनिभः संहतोऽङ्गसुखदो महोदयः।
योगयात्रा-८.१४गघ/ अङ्कुशाब्जजलवारणच्छविर्[K.ऊ.अङ्कुशातपनिवारणाकृतिर्] हूयतेऽल्पतपसां न [ऊ.ऽल्प उपमान] हव्यभुक्॥

योगयात्रा-८.१५कख/ चामीकराशोककिरीटरत्न[K.कुरण्टकाब्ज]वैदूर्यनीलोत्पलसंनिभेऽग्नौ।
योगयात्रा-८.१५गघ/ न ध्वान्तम् अन्तर् भवनेऽवकाशं करोति रत्नांशुहृतं[K.हतं] नृपस्य॥

योगयात्रा-८.१६कख/ येषां रथौघार्णवमेघदन्तिनां समः स्वनो[K.समस्वनो]ऽग्निर् यदि वाऽपि दुन्दुभेः।
योगयात्रा-८.१६गघ/ तेषां मदान्धेभघटावघट्टिता भवन्ति याने तिमिराबिला [तिमिरोपमा] दिशः॥

योगयात्रा-८.१७कख/ ध्वजकुम्भहयेभभूभृताम् अनुरूपे वशम् एति भूभृताम्।
योगयात्रा-८.१७गघ/ उदयास्तधराधराधरा हिमवद्विन्ध्यपयोधरा धरा॥

योगयात्रा-८.१८कख/ द्विरदमदमहीसरोजलाजैर् घृतमधुना[K.घृतमधुनोश्] च हुताशने सगन्धे।
योगयात्रा-८.१८गघ/ प्रणतनृपशिरोमणिप्रभाभिर् भवति पुरश् छुरिता नृपस्य दीप्तिः[K.पुरश् छुरितेव भूर् नृपस्य]॥

योगयात्रा-८.१९कख/ अग्न्याश्रितं यत् फलम् उक्तम् अस्मिंस् नृजातकर्मादिषु[K.तज् जातकर्मादिषु] पौष्टिकेषु।
योगयात्रा-८.१९गघ/ यज्ञेषु सर्वेषु च वह्निकार्येष्व् एवं वदेद् यस्य यथानुरूपम्//E१९

# नक्षत्रकेन्दुभाध्याय

योगयात्रा-९.१कख/ जन्मर्क्षम् आद्यं दशमन् तु कर्म[K.दशमं च कर्म] सांघातिकं षोडशम् ऋक्षम् आद्यात्।
योगयात्रा-९.१गघ/ अष्टादशं स्यात् समुदायसंज्ञं वैनाशिकं विंशतिभात् तृतीयम्[K.विंशतिभिस् त्रिभिश् च]॥

योगयात्रा-९.२कख/ यत् पञ्चविंशं खलु मानसं तत् षड्क्ष एवं पुरुषस् तु सर्वः।
योगयात्रा-९.२गघ/ राज्ञो नवर्क्षाणि वदन्ति जातिदेशाभिषेकैः सहितानि तानि॥

योगयात्रा-९.३कख/ राज्ञोऽभिषेकर्क्षम् उशन्त्य् अमिश्रं साधारणे द्वे सह षड्भिर् आद्यैः।
योगयात्रा-९.३गघ/ किम्त्व् अत्र दोषाश् च गुणाश् च सर्वे प्रधानम् एकं पुरुषं भजन्ते॥

योगयात्रा-९.४कख/ कूर्मोपदिष्टानि हि देशभानि राज्ञोऽभिषेकाहनि चऽऽभिषेकम्।
योगयात्रा-९.४गघ/ या जातयश् भस्य[K.चऽपि] भवन्त्य् अतस् ता वर्गाश् च वक्ष्यामि यथाक्रमेण[K.वक्ष्यामि दैवज्ञनिराकुलार्थम्]॥

योगयात्रा-९.५कख/ पूर्वात्रयं सानलम् अग्रजानां राज्ञां तु पुष्येण सहोत्तराणि।
योगयात्रा-९.५गघ/ सपौष्णमैत्रं पितृदैवतं च प्रजापतेर् भं च कृषीवलानाम्॥

योगयात्रा-९.६कख/ आदित्यहस्ताभिजिदाश्विनानि वणिग्जनानां प्रवदन्ति भानि।
योगयात्रा-९.६गघ/ मूलत्रिनेत्रानिलवारुणानि भान्य् उग्रजातेः प्रभविष्णुतायाः॥

योगयात्रा-९.७कख/ सौम्येन्द्र[K.ऐन्द्र]चित्रावसुदैवतानि सेवाजनस्वाम्यम् उपागतानि।
योगयात्रा-९.७गघ/ सार्पं विशाखाश्रवणे भरण्यश् चाण्डालजातेर् अभिनिर्दिशन्ति[K.इति निर्दिशन्ति]॥

योगयात्रा-९.८कख/ रविरविसुतभोगम् आगतं क्षितिसुतभेदनवक्रदूषितं।
योगयात्रा-९.८गघ/ ग्रहणगतम् अथोऽल्कया हतं नियतमुखाकर[K.नियतम् उषाकर]पीडितं च यत्॥

योगयात्रा-९.९कख/ तद् उपहतम् इति प्रचक्षते प्रकृतिविपर्ययजातम्[K.यातम्] एव वा।
योगयात्रा-९.९गघ/ निगदितपर[K.परि]वर्गदूषितं[K.दूषणं] कथितविपर्ययगं समृद्धये॥

योगयात्रा-९.१०क/ रोगाभियागमवित्तनाशकलहा[K.रोगाभियागमवित्तनाशकलहाः] सम्पीडिते जन्मभे

योगयात्रा-९.१०ख/ सिद्धिं कर्म न याति कर्मणि हते भेदास् तु सांघातिके।
योगयात्रा-९.१०ग/ द्रव्यस्योपचितस्य सामुदयिके संपीडिते संक्षयो

योगयात्रा-९.१०घ/ वैनाशे तु भवन्ति कायविपदश् चित्तासुखं मानसे॥

योगयात्रा-९.११कख/ निरुपद्रुतभो निरामयः सुखभाग् पुष्टतनुर्[K.नष्टरिपुर्] धनान्वितः।
योगयात्रा-९.११गघ/ षड्उपद्रुतभो विनश्यति त्रिभिर् अन्यैश् च सहऽवनीश्वरः॥

योगयात्रा-९.१२कख/ न भवति शरीरपीडा यस्य विना शान्तिभिर् भपीडायाम्।
योगयात्रा-९.१२गघ/ तस्य शरीरविपत्तिः पाकान्ते देवलः प्राह॥

योगयात्रा-९.१३कख/ सर्वेषां पीडायां दिनम् एकम् उपोषितोऽनलं जुहुयात्/ Vढ़ड़् १.८९.१--१३

योगयात्रा-९.१३गघ/ सावित्र्या क्षीरतरोः समिद्भिर् अमरद्विजानुरक्तः[K.रतः]॥

योगयात्रा-९.१४कख/ गोक्षीरसितवृषभ[K.वृष]शकृन्मूत्रैः पत्रैश् च पूर्णकोशायाः।
योगयात्रा-९.१४गघ/ स्नानं जन्मनि दुष्टे स्वाचारवतां हरति पापम्॥

योगयात्रा-९.१५कख/ कर्मणि मधुघृतहोमो दशाहम् अक्षारमद्यमांसादः।
योगयात्रा-९.१५गघ/ दूर्वाप्रियंगुसर्षपशतपुष्पशतावरीस्नानम्॥

योगयात्रा-९.१६कख/ सांघातिकेऽभितप्ते[K.तु तप्ते] मांसमधुक्रौर्यमन्मथांस् त्यक्त्वा।
योगयात्रा-९.१६गघ/ स्नातो[K.दान्तो] दूर्वां जुहुयाद् दानं दद्याद् यथाशक्ति॥

योगयात्रा-९.१७कख/ सामुदयिकेऽपि[K.तु] दद्यात् काञ्चनरजतान्य् उपहते[K.उपद्रुते] धिष्ण्ये।
योगयात्रा-९.१७गघ/ वैनाशिकेऽन्नपानं वसुधां च गुणाण्विते दद्यात्॥

योगयात्रा-९.१८कख/ मानसतापे होमः सरोरुहैः पायसैर् द्विजाः पूज्याः।
योगयात्रा-९.१८गघ/ गजमदशिरीषचन्दनबलातिबलवारिणा स्नानम्//E१८ ेरे Kएर्न्ऽस् वेर्सिओन् एन्द्स्.

## हस्तिलक्षणाध्याय

योगयात्रा-१०.१कख/ आरिराधयिषुणा नराधिपं वारणाश्रितम् इदं शुभाशुभम्।
योगयात्रा-१०.१गघ/ ज्ञेयम् आदरवता विपश्चिता वारणेषु नृपतेर् जयस्थितिः॥

योगयात्रा-१०.२कख/ सार्द्धं हस्तशतं दैर्घ्या सावंशं विपुला शतम्।
योगयात्रा-१०.२गघ/ चतुरस्त्राऽथवा वृत्ता वारी वारणवृद्धिदा॥

योगयात्रा-१०.३कख/ दशावगाहेन करा विस्तीर्णा दश चोपरि।
योगयात्रा-१०.३गघ/ अधःखातस्य पदवी हस्तमात्रा प्रकीर्तिता॥

योगयात्रा-१०.४कख/ कर्त्तव्यं पूर्वतो द्वारम् उत्तरं वा शुभावहम्।
योगयात्रा-१०.४गघ/ दक्षिणं पश्चिमं वाऽपि न कर्त्तव्यं कथञ् चन॥

योगयात्रा-१०.५कख/ मेढकस्तम्भमात् तृणां वृक्षाग्रं नावनौ क्षिपेत्।
योगयात्रा-१०.५गघ/ पूर्वाप्राच् चोत्तराग्राच् च संयोज्या नित्यम् अर्गला॥

योगयात्रा-१०.६कख/ दश विस्तारतो द्वारं पार्श्वयोस् तस्य मातृकाः।
योगयात्रा-१०.६गघ/ चतुर्दश करोत्सेधा निःखात्य चतुरः करान्॥

योगयात्रा-१०.७कख/ षट् षण्मेढान्तरस्थाश् च मेढकाः पञ्च पञ्च च।
योगयात्रा-१०.७गघ/ चतुर्हस्तनिखातास् ते समुच्छ्रायान् वदाम्य् अतः॥

योगयात्रा-१०.८कख/ षट् सप्ताष्टनवोत्सेधा दश वेति यथाक्रमम्।
योगयात्रा-१०.८गघ/ नव वा दश वा वेधा मातृका याः षडङ्गुलाः॥

योगयात्रा-१०.९कख/ वेधहान्यावशेषाः स्युर् मातृकाः क्रमशोऽपराः।
योगयात्रा-१०.९गघ/ इति द्वारसमासोऽयं वार्य्यास् संपरिकीर्त्तितः॥

योगयात्रा-१०.१०कख/ मध्वाभदन्ताः सुविभक्तदेहा न चोपदिग्धा न कृशाः क्षमाश् च।
योगयात्रा-१०.१०गघ/ गात्रैः समैश् चापसमानवंशा वाराहतुल्यैर् जघनैश् च भद्राः॥

योगयात्रा-१०.११कख/ वक्षोऽथ कक्षा वलयः श्लथश् च लम्बोदरस् त्वग्वृहती गलश् च।
योगयात्रा-१०.११गघ/ स्थूला च कुक्षिः सह मेचकेन सैंही च दृग्मन्दमतङ्गजस्य॥

योगयात्रा-१०.१२कख/ मृगास् तु ह्रस्वाधरबालमेढ्रास् तन्वङ्घ्रिकण्ठद्विजहस्तकर्णाः।
योगयात्रा-१०.१२गघ/ स्थूलेक्षणाश् चेति यथोक्तचिह्नैः सङ्कीर्णनागा व्यतिमिस्रचिह्नाः॥ह्न् B

योगयात्रा-१०.१३कख/ पञ्चोन्नतिः सप्त मृगस्य दैर्घ्यम् अष्टौ च हस्ताः परिणाहमानम्।
योगयात्रा-१०.१३गघ/ एकद्विवृद्धाव् अथ मन्दभद्रौ संकीर्णनागोऽनियतप्रमाणः॥

योगयात्रा-१०.१४कख/ भद्रस्य वर्णो हरितो मदस्य मन्दस्य हारिद्रिकसन्निकाशः।
योगयात्रा-१०.१४गघ/ कृष्णो मदश् चाभिहितो मृगस्य संकीर्णनागस्य मदो विमिश्रः॥

योगयात्रा-१०.१५कख/ स्थपतिर् अतः प्रयतो गजशालां नरपतिमन्दिरदक्सिणभागे।
योगयात्रा-१०.१५गघ/ अवनिगुणान् अवलोक्य विदध्यात् कृतबलिहोमसुराचनशान्तिः॥

योगयात्रा-१०.१६कख/ यातुधानदितिसर्पसङ्कुला सन्निकृष्टविबुधद्विजालया।
योगयात्रा-१०.१६गघ/ शर्करास्थिचयभस्मदूषिता पार्थिवद्विरददोषदा मही॥

योगयात्रा-१०.१७कख/ किञ्चिद् अभ्युन्नता भूः प्रशस्तद्रुमा गोभिर् अध्यासिता साधु मध्ये समा।
योगयात्रा-१०.१७गघ/ भूरितोयाऽघना हृद्दृगाह्लादिनी शल्यदोषैर् विना सानुनादस्वना॥

योगयात्रा-१०.१८कख/ स्निग्धपल्लवद्रुमा प्रदक्षिणाम्बुवाहिनी।
योगयात्रा-१०.१८गघ/ स्वराष्ट्रवृद्धिदा मही हिताऽथ नागवाजिनाम्॥

योगयात्रा-१०.१९कख/ भद्रमन्दमृगमिश्रदन्तिनां श्वेतरक्तकनकोपमासिताः।
योगयात्रा-१०.१९गघ/ भूमयो द्विरदपुष्टिवृद्धिदा भूभृताम् अपि यशः सुखावहाः॥

योगयात्रा-१०.२०कख/ ज्येष्ठा चतुर्विंशतिर् एव हस्ता द्विद्व्यूनिते मध्यजघन्यशाले।
योगयात्रा-१०.२०गघ/ विस्तारतस् तद्द्विगुणाश् च दीर्घास्तम्भाश् च विस्तारसमुच्छ्रिताः स्युः॥

योगयात्रा-१०.२१कख/ ज्येष्ठोऽङ्गुलानि बहुलो दशषड्युतानि मध्यस् तु पञ्चदश कन्यस्?ओऽङ्गुलोनः।
योगयात्रा-१०.२१गघ/ स्तम्भप्रमाणविपुलाः क्रमशो निषङ्गाः प्रोक्ताङ्गुलार्द्धसदृशं बहुलत्वम् एषाम्॥

योगयात्रा-१०.२२कख/ सर्वासु शालासु च कण्टकस्य हस्तोऽर्धयुक्तः परिणाह उक्तः।
योगयात्रा-१०.२२गघ/ कण्टप्रमाणेन समुन्नतश् च तलप्रवन्धो दृढदारुबन्धः॥

योगयात्रा-१०.२३कख/ अलिन्दभित्तौ तु गवाक्षकेषु कुर्याद् गुणद्वारकजालकांश् च।
योगयात्रा-१०.२३गघ/ निर्ब्यूहयुक्तासु च वेदिकासु कार्या बिभूषा परितो मयोक्ता॥

योगयात्रा-१०.२४कख/ कमलोत्पलहंसयुगप्रमथैः प्रमदायुगपत्रविहङ्गघटैः।
योगयात्रा-१०.२४गघ/ विविधैस् तरुभिः सशुकभ्रमरैः फलपल्लवपुष्पभरावनतैः॥

योगयात्रा-१०.२५कख/ व्यालककुञ्जरमत्स्यमृगेन्द्रैः कन्दम्रणाललतांकुरशोभैः।
योगयात्रा- १०.२५गघ/ वारिचरैश् च चिता मकराद्यैः शिक्षितशिल्पिविनिर्मितरूपा॥

योगयात्रा-१०.२६कख/ द्वारोच्छ्रायाः कुञ्जराणाम् अतुल्या विस्तारोऽस्य त्र्यंशहीनः स एव।
योगयात्रा-१०.२६गघ/ हीनो भूयश् चात्मषष्ठांशकेन शालाद् द्वारं प्रागुदक् च प्रशस्तम्॥

योगयात्रा-१०.२७कख/ विचित्रनिर्व्यूहमृगेन्द्रपञ्जरं कपाटमेढार्गलसुप्रयोजितम्।
योगयात्रा-१०.२७गघ/ सुवेदिकालङ्कृतम् ईक्षणप्रियं प्रवेशनं निर्गमनाय चापरम्॥

योगयात्रा-१०.२८कख/ चन्दनार्जुनशिरीषमधूका देवदारुसरलाञ्जनशालाः।
योगयात्रा-१०.२८गघ/ रोहिणीखदिरचम्पकशाकाः स्यन्दनश् च सकदम्बविशोकाः॥

योगयात्रा-१०.२९कख/ शीताः शिवाश् च द्विपबन्धनार्थम् एते द्रुमाः पुष्टिकरा द्विपानाम्।
योगयात्रा-१०.२९गघ/ स्तम्भार्थम् अन्येऽपि हि सारवन्तः कार्याः प्रशस्ता गुणसंप्रयुक्ताः॥

योगयात्रा-१०.३०कख/ पूर्वाभिमुखो निबध्यते यः क्षिप्रं स करोति विक्रमम्।
योगयात्रा-१०.३०गघ/ राज्ञस् समरेष्व् अनिर्जितो दीर्घं चायुर् अवाप्नुयाद् गजः॥

योगयात्रा-१०.३१कख/ दक्षिणदिग्वदनस्य च बन्धो जीवितनाशकरो द्विरदस्य।
योगयात्रा-१०.३१गघ/ धान्यधनक्षयम् आशु च कुर्यान् मन्त्रिजनस्य नराधिपतेश् च॥

योगयात्रा-१०.३२कख/ पश्चान् मुखं बन्धम् अवाप्य नागो नित्यं भवेद् रोगनिपीडिताङ्गः।
योगयात्रा-१०.३२गघ/ नाशञ् च वित्तस्य करोति राज्ञस् तस्मात् स याम्यापरदिग्विवर्ज्यः॥

योगयात्रा-१०.३३कख/ उदङ्मुखं बन्धम् उपैति नागो योऽर्थस्य वृद्धिं स करोति भर्तुः।
योगयात्रा-१०.३३गघ/ प्राप्नोति पुष्टिं चिरजीविताञ् च संग्रामकालेष्व् अपराजयञ् च॥

योगयात्रा-१०.३४कख/ सुषिरोर्ध्वशुष्ककोटरकोलाक्षग्रन्थिबहुलशूलाग्राः।
योगयात्रा-१०.३४गघ/ मधुनिलयमूलहीनाग्रकुञ्जबल्लीव्रणानुगताः॥

योगयात्रा-१०.३५कख/ वामावर्त्तः शृङ्गी कुणिलोऽवनतोऽनुजातविद्धश् च।
योगयात्रा-१०.३५गघ/ पितृवनजः स्थूलाग्रस्त्रिकुब्जको द्राणिकावहुतः?॥

योगयात्रा-१०.३६कख/ स्थूलग्रन्थिर् वज्रेण चूर्णितश् चाशुभप्रदाः।
योगयात्रा-१०.३६गघ/ सर्वे बन्धार्थे नागानाम् अतः फलानि प्रवक्ष्यामि॥

योगयात्रा-१०.३७कख/ मासान् षडूर्ध्वसुषिरे स्तम्भे च बन्धमासाद्य।
योगयात्रा-१०.३७गघ/ मरणम् उपयाति नागो निपीडितो वातरोगेण॥

योगयात्रा-१०.३८कख/ म्रियते कोटरविद्धे कोलाक्षेऽन्धत्वम् आप्नुयाद् नागः।
योगयात्रा-१०.३८गघ/ क्षुत्पीडां ग्रन्थिचिते मृत्युं शूलेन शूलाग्रे॥

योगयात्रा-१०.३९कख/ मूलाग्रकुब्जहीनेषु मरणम् अब्दात् सहैव हस्तिन्याः।
योगयात्रा-१०.३९गघ/ शृङ्गिनि मृत्युर् मधुदूषिते च मरणं कृमिगदेन॥

योगयात्रा-१०.४०कख/ गात्रस्य भवति भङ्गो बल्लीदुष्टे घ्राणावकीर्णे च।
योगयात्रा-१०.४०गघ/ वामावर्त्ते नृपतेर् विनश्यते वाहनं सर्वम्।
योगयात्रा-१०.४१कख/ मृद्गर्भे कुणिलाख्ये नृपतेः समहाजनस्य मरणाय।
योगयात्रा-१०.४१गघ/ नागस्य तु त्रिकुब्जे भवति बधो युध्यतः स्तम्भे॥

योगयात्रा-१०.४२कख/ अनुजातविद्धबद्धः सुकुमारो वारणो मरणम् एति।
योगयात्रा-१०.४२गघ/ वर्षद्वयेन मृत्युः पितृवनजाते निबद्धस्य॥

योगयात्रा-१०.४३कख/ स्थूलाग्रानतयोर् मरणम् एति मासेऽष्टमे महामात्रः।
योगयात्रा-१०.४३गघ/ द्विरदस्य क्षुत्पीडा बद्धस्य द्रोणिकाबहुले॥

योगयात्रा-१०.४४कख/ स्थूलग्रन्थिर् विस्फोटमृत्युकृद् दन्तिनो द्वितीयेऽब्दे।
योगयात्रा-१०.४४गघ/ अशनिहते विज्ञेयः षण्मासाद् दन्तिनां मृत्युः॥

योगयात्रा-१०.४५कख/ प्रदक्षिणावर्त्तमनोज्ञवृतसुस्निग्धऋज्वव्रणसारवन्तः।
योगयात्रा-१०.४५गघ/ दोषैर् विहीना विजयाय शुद्धाः स्तम्भा द्विपानां बलपुष्टिदाः स्युः॥योगयात्रा-१०.४६कख/ यः सम्पातः कर्णसूत्र?द्वयस्य तस्माद् धस्तं सार्द्धम् उत्सृज्य कार्यः।
योगयात्रा-१०.४६गघ/ दिश्य् ऐशान्यां बन्धनार्थं द्विपानां स्तम्भो राज्ञः श्रेयसे दन्तिनश् च॥

योगयात्रा-१०.४७कख/ आग्नेय्यां द्विपमरणं नृपार्थहानिर् नैरृत्यां समरपराभवार्थनाशौ।
योगयात्रा-१०.४७गघ/ मारुत्यां भवति मतङ्गजस्य रोगः स्तम्भोऽतः शिवदिशि रोपितः शिवाय॥

योगयात्रा-१०.४८कख/ ज्येष्ठो दशोच्चो नव मध्यमश् च स्तम्भोऽष्टहस्तः कथितः कनीयान्।
योगयात्रा-१०.४८गघ/ सर्वे निखाताश् चतुरश् च हस्तान् मानाधिकोनाश् च शिवाय न स्युः॥

योगयात्रा-१०.४९कख/ स्याद् विंशतिर् द्वित्रिचतुर्विहीना मूलेऽङ्गुलानां पृथुता क्रमेण।
योगयात्रा-१०.४९गघ/ द्व्यूनानि तान्य् एव हि मस्तके स्युः पर्यन्तवेष्टा त्रिगुणानि तानि॥

योगयात्रा-१०.५०कख/ ताम्रौष्ठतालुवदनाः कलविङ्कनेत्राः स्निग्धोन्नताग्रदशनाः पृथुलायतास्याः//(Bऋ २१.२, Bष् ६६.६)

योगयात्रा-१०.५०गघ/ चापोन्नता यतनिगूढनिमग्नवंशास् तन्वेकरोमचितकूर्मसमानकुम्भाः॥

योगयात्रा-१०.५१कख/ विस्तीर्णकर्णहनुनाभिललाटगुह्याः कूर्मोन्नतैर् द्विनवविंशतिभिर् नखैश् च/(Bऋ २१.३, Bष् ६६.७)

योगयात्रा-१०.५१गघ/ रेखात्रयोपचितवृत्तकराः सुब?ला धन्याः सुगन्धिमदपुष्करमारुताश् च॥

योगयात्रा-१०.५२कख/ दीर्घाङ्गुलिरक्तपुष्कराः सजलाम्भोदनिनादवृंहिणः/(Bऋ २१.४, Bष् ६६.८)

योगयात्रा-१०.५२गघ/ बृहदायतवृत्तकन्धरा धन्या भूमिपतेर् मतङ्गजाः॥

योगयात्रा-१०.५३कख/ निर्मदाभ्यधिकहीननखाङ्गान् कुब्जवामनकमेषविषाणान्/(Bऋ २१.५, Bष् ६६.९)

योगयात्रा-१०.५३गघ/ दृश्यकोशफलपुष्करदीनान् श्यावनीलशवलासिततालून्॥

योगयात्रा-१०.५४कख/ स्वल्पवक्त्ररुहमत्कुणषण्ढान् हस्तिनीञ् च गजलक्षणयुक्ताम्/(Bऋ २१.६, Bष् ६६.१०)

योगयात्रा-१०.५४गघ/ गर्भिनीञ् च नृपतिः परदेशं प्रापयेद् अतिबिरूपफलास् ते॥

योगयात्रा-१०.५५कख/ दन्तमूलपरिणाहदीर्घतां द्विःप्रमुच्य परतोऽस्य कल्पयेत्/(Bऋ २१.७)

योगयात्रा-१०.५५गघ/ श्यावपू?तिमलरक्तदर्शनं पापसत्त्वसदृशं च पापदम्॥

योगयात्रा-१०.५६कख/ पार्थिवोपकरणाकृतिं यदा चिह्नम् उद्वहति कल्पिते रदे/(Bऋ २१.८) ह्न् B

योगयात्रा-१०.५६गघ/ श्रीजयार्थवलवृद्धयस् तदा स्निग्धशुक्लरुचिराश् च शोभनाः॥

योगयात्रा-१०.५७कख/ दक्षिणे शुभम् अतीवशोभन पापम् अप्य् अतिविरूपम् अन्यतः/(Bऋ २१.९)

योगयात्रा-१०.५७गघ/ जाप्यता भवति तद् विपर्यये विस्तरोऽन्यमुनिभिः प्रकीर्त्तितः॥

योगयात्रा-१०.५८कख/ मूलमध्यदशनाग्रसंस्थिता देवदैत्यमनुजाः क्रमात् ततः/(Bऋ २१.१०)

योगयात्रा-१०.५८गघ/ स्फीतमध्यपरिपेलवं फलं शीघ्रमध्यचिरकालसंभवम्॥

योगयात्रा-१०.५९कख/ दन्तभङ्गफलम् अत्र दक्षिणे भूपदेशबलविद्रवप्रदम्/(Bऋ २१.११)

योगयात्रा-१०.५९गघ/ वामतः सुतपुरोहिते भयं हन्ति भृत्यजनदारनायकान्॥

योगयात्रा-१०.६०कख/ आदिशेद् उभयभङ्गदर्शनात् पार्थिवस्य सकलं कुलक्षयम्/(Bऋ २१.१२)

योगयात्रा-१०.६०गघ/ सौम्यलग्नतिथिभादिभिः शुभं वर्द्धते शुभम् अतोऽन्यथापरम्॥

योगयात्रा-१०.६१कख/ क्षीरमिष्टफलपुष्पपादपैश् चापगातटविघट्टनेन वा/(Bऋ २१.१३)

योगयात्रा-१०.६१गघ/ वाममध्यरदभङ्गखण्डनं शत्रुनाशकृद् अतोऽन्यथापरम्॥

योगयात्रा-१०.६२कख/ स्खलितगतिर् अकस्मात् त्रस्तकर्णोऽतिदीनः श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम्।
योगयात्रा-१०.६२गघ/ द्रुतमुकुलितदृष्टिः स्वप्नशीलो विलोमो भयकृद् अहितभक्षी नैकशोऽसृअक् शकृत्कृत्॥

योगयात्रा-१०.६३क/ वल्मीकस्थाणुगुल्मेक्षुतरुविमथनः स्वेच्छया हृष्टदृष्टिर्

योगयात्रा-१०.६३ख/ यायाद् यात्रानुलोमं त्वरितपदगतिर् वक्त्रम् उन्नाम्य चोच्चैः।
योगयात्रा-१०.६३ग/ कक्ष्यासन्नाहकाल् जनयति च मुहुः शीकरं बृंहते वा

योगयात्रा-१०.६३घ/ तत्कालं वा मदाप्तिर् जयकृद् अथ रदं वेष्टयन् दक्षिणश् च॥

योगयात्रा-१०.६४कख/ प्रवेशनं वारिणि वारणस्य ग्राहेण नाशाय भवेन् नृपस्य।
योगयात्रा-१०.६४गघ/ ग्राहं गृहीत्वात् तरणं द्विपस्य तोयात् स्थले वृद्धिकरं नृभर्तुः॥

योगयात्रा-१०.६५क/ रणे जित्वा शत्रून् भवति नृपलक्ष्मीः क्षितिभृतां

योगयात्रा-१०.६५ख/ जयस् तेषां येषां मदमलिनगण्डाः करिवराः।
योगयात्रा-१०.६५ग/ भिनत्य् एको मत्तः परवलममत्तेभबहुलं

योगयात्रा-१०.६५घ/ यतोऽतोऽहं वक्ष्ये करिमदकरं द्रव्यनिचयम्॥

योगयात्रा-१०.६६कख/ जातीगुडूचीकदलीतिलानाम् आस्फोतकर्पासवलान्वितानाम्।
योगयात्रा-१०.६६गघ/ मार्गी सनीलीगिरिकर्णिकानां धत्तूस्कस्यन्दनमाषभागः॥

योगयात्रा-१०.६७कख/ कलम्बुका कर्णकमापपर्णी पुनर्नवा भृङ्गरजोऽश्वगन्धाः।
योगयात्रा-१०.६७गघ/ शेफालिकांसोटककच्छुराश् च कोशातकी गोक्षुरकं विदारी॥

योगयात्रा-१०.६८कख/ विष्णुक्रान्ता दुग्धिका शालपर्णी खट्वापादी वाकुची वस्तगन्धा।
योगयात्रा-१०.६८गघ/ व्याघ्री च स्यात् पृष्णिपर्णी मृणालं पटोरकः सल्लकी तन्दुलीयः॥

योगयात्रा-१०.६९कख/ एतैर् यथासंभवसम्प्रयुक्तैर् मत्तस्य नागस्य मदाभिवृद्धिः।
योगयात्रा-१०.६९गघ/ दानप्रमेदश् च मदोज्झितस्य सर्वाङ्गशोभा च मुखेऽतिरिक्ता॥

योगयात्रा-१०.७०कख/ जीवकमधूकधन्वनपटेरकङ्कोलकदलिऋषभाणाम्।
योगयात्रा-१०.७०गघ/ सौभाञ्जननिम्बेङ्गुदपरुषकाणाञ् च मूलानि॥

योगयात्रा-१०.७१कख/ मूलानि शतावर्याः काकोली क्षीरसंज्ञकाकोली।
योगयात्रा-१०.७१गघ/ श्लेष्मान्तकशाल्मलिशल्लकीजटाः स्युर् बिम्दायश् च॥

योगयात्रा-१०.७२कख/ काशीसाश्मन्तकराजमाषमूलानि चैवम् एतानि।
योगयात्रा-१०.७२गघ/ सर्वाणि वक्त्रशाभां जनयन्ति सदैव नागानाम्॥

योगयात्रा-१०.७३कख/ नीलीपत्रैश् चूर्णितैर् माषचूर्णो दध्ना युक्तो माहिषेणैव पिण्डः।
योगयात्रा-१०.७३गघ/ नागेन्द्राणाम् आशु घत्ते मदाप्तिं नील्येकैव द्रव्यवर्गे प्रधाना॥

योगयात्रा-१०.७४कख/ एकैव करोति काकजङ्घा ह्य् एकेकैव च माषमुद्गपर्णी।
योगयात्रा-१०.७४गघ/ ताम्बूलवनार्द्रवृश्चिकाल्षश् चैकैका मददास् तथैव मुस्ताः॥

योगयात्रा-१०.७५कख/ कार्पास्येका चञ्चुसंयोजिता वा ज्ञेया चैका कण्टकी शैलिकाख्या।
योगयात्रा-१०.७५गघ/ एकः शस्तो बल्कलः स्फूर्जकस्य जाती भृङ्गेनान्वितो वा कुठेरः॥

योगयात्रा-१०.७६कख/ एवम् एवेङ्गुदीमूलं मदप्राचुर्यकारकम्।
योगयात्रा-१०.७६गघ/ एका च श्वेतकाम्बोजी श्वेता चैकाऽपराजिता॥

योगयात्रा-१०.७७कख/ समूलो वीरणस्तम्बः समूला मल्लिका तथा।
योगयात्रा-१०.७७गघ/ मदप्राचुयसौरम्यं कुर्वन्तीन्दीवराणि च॥

योगयात्रा-१०.७८कख/ सुरसा गण्डसंयुक्ता पुनर् नवा गोमयेऽथवा स्विन्ना।
योगयात्रा-१०.७८गघ/ वाराहीमूलानि च निन्दन्ति गुडेन युक्तानि॥

योगयात्रा-१०.७९कख/ मध्वालुका मधुयुता मुखशोभाम् आतनोति नागानाम्।
योगयात्रा-१०.७९गघ/ नेक्ष्वाहारस्य हितो गुडेन पिण्डो हितो दध्ना॥

योगयात्रा-१०.८०कख/ माषाशिनां गुडयुतस्तृणाशिनां शस्यते वसायुक्तः।
योगयात्रा-१०.८०गघ/ व्यतिमिश्राहाराणां विज्ञाय बलाबलं दद्यात्॥

योगयात्रा-१०.८१कख/ प्रायो मदस्य पवनः कुरुते विघातं स्रोतांस्य् अतो घृतयुतैर् बहुशोऽस्य पिण्डैः।
योगयात्रा-१०.८१गघ/ स स्वेदयेद् भवति येन मदप्रवृद्धिर् भिन्नस्य चापि मदवृद्धिकराणि दद्यात्//E८१

# अश्वेङ्गिताध्याय

योगयात्रा-११.१क/ दीर्घग्रीवाक्षिकूतस् त्रिकहृदयपृथुस् ताम्रताल्वोष्ठजिह्वः(Bष् ६५.१)

योगयात्रा-११.१ख/ सूक्ष्मत्वक्केशवालः सुशफगतिमुखो ह्रस्वकर्णोष्ठपुच्छः।
योगयात्रा-११.१ग/ जंघाजानूरुवृत्तः समसितदशनश् चारुसंस्थानरूपो

योगयात्रा-११.१घ/ वाजी सर्वाङ्गशुद्धो भवति नरपतेः शत्रुनाशाय नित्यम्॥

योगयात्रा-११.२कख/ उत्सर्गान् न शुभदम् आसनापरस्थं वामे च ज्वलनम् अतोऽपरं प्रशस्तम्/(Bष् ९२.१)

योगयात्रा-११.२गघ/ सर्वाङ्गज्वलनम् अवृद्धिदं हयानां द्वे वर्षे दहनकणाश् च धूपनं वा॥

योगयात्रा-११.३कख/ अन्तःपुरं नाशम् उपैति मेढ्रे कोशक्षयं यात्य् उदरे प्रदीप्ते/(Bष् ९२.२)

योगयात्रा-११.३गघ/ पायौ च पुच्छे च पराजयः स्याद् वक्त्रोत्तमाङ्गज्वलने जयश् च॥

योगयात्रा-११.४कख/ स्कन्धासनांशज्वलनं जयाय बन्धाय पादज्वलनं प्रदिष्टम्/(Bष् ९२.३)

योगयात्रा-११.४गघ/ ललाटवक्षोऽक्षिभुजे च धूमः पराभवाय ज्वलनं जयाय॥

योगयात्रा-११.५कख/ नासापुटप्रोथशिरोऽश्रुपातनेत्रे च रात्रौ ज्वलनं जयाय/(Bष् ९२.४)

योगयात्रा-११.५गघ/ पालाशताम्रासितकर्बुराणां नित्यं शुकाभस्य सितस्य चेष्टम्॥

योगयात्रा-११.६क/ प्रद्वेषो यवसाम्भसां प्रपतनं स्वेदो निमित्ताद् विना(Bष् ९२.५)

योगयात्रा-११.६ख/ कम्पो वा वदनाच् च रक्तपतनं धूमस्य वा संभवः।
योगयात्रा-११.६ग/ अस्वप्नश् च विरुध्यता निशि दिवा निद्रालसध्यानता

योगयात्रा-११.६घ/ सादोऽधोमुखता विचेष्टितम् इदं नेष्टं स्मृतं वाजिनाम्॥

योगयात्रा-११.७कख/ आरोहणम् अन्यवाजिनां पर्याणादियुतस्य वाजिनः/(Bष् ९२.६)

योगयात्रा-११.७गघ/ उपवाह्य तुरङ्गमस्य वा कल्पस्यैव विपन्न शोभना॥

योगयात्रा-११.८कख/ क्रौञ्चवद् रिपुवधाय हेषितं ग्रीवया त्व् अचलया च सोन्मुखम्/(Bष् ९२.७)

योगयात्रा-११.८गघ/ स्निग्धम् उच्चम् अनुनादि हृष्टवद् ग्रासरुद्धवदनश् च वाजिभिः॥

योगयात्रा-११.९कख/ पूर्णपात्रदधिविप्रदेवता गन्धपुष्पफलकाञ्चनादि च/(Bष् ९२.८)

योगयात्रा-११.९गघ/ द्रव्यमिष्टम् अथवापरं भवेद् हेषता यदि समीपतो जयः॥

योगयात्रा-११.१०कख/ भक्ष्यपानखलिनाभिनन्दिनः पत्युर् औपयिकनन्दिनोऽथवा/(Bष् ९२.९) योगयात्रा-११.१०गघ/ सव्यपार्श्वगतदृष्टयोऽथवा वाञ्छितार्थफलदास् तुरङ्गमाः॥

योगयात्रा-११.११कख/ वामैश् च पादैर् अभिताडयन्तो महीं प्रवासाय भवन्ति भर्त्तुः/(Bष् ९२.१०)

योगयात्रा-११.११गघ/ सन्ध्यासु दीप्ताम् अवलोकयन्तो ह्रेषन्ति चेद् वन्धपराजयाय॥

योगयात्रा-११.१२कख/ अतीव ह्रेषन्ति किरन्ति बालान् निद्रारताश् च प्रवदन्ति यात्राम्/(Bष् ९२.११)

योगयात्रा-११.१२गघ/ रोमत्यजा दीनखरस्वरांश् च प्रांशून् ग्रसन्तश् च भयाय दिष्टाः॥

योगयात्रा-११.१३कख/ समुद्गवद् दक्षिणपार्श्वशायिनः पादं समुत्क्षिप्य च दक्षिणं स्थिताः/(Bष् ९२.१२)

योगयात्रा-११.१३गघ/ जयाय शेषेष्व् अपि वाहनेष्व् इदं फलं यथासंभवम् आदिशेद् बुधः॥

योगयात्रा-११.१४कख/ आरोहति क्षितिपतौ विनयोपपन्नो यात्राऽनुगोऽन्यतुरगं प्रति ह्रेषितश् च/(Bष् ९२.१३)

योगयात्रा-११.१४गघ/ वक्रेण वा स्पृशति दक्षिणम् आत्मपार्श्वं योऽश्वः स भर्तुर् अचिरात् प्रचिनोति लक्ष्मीम्॥

योगयात्रा-११.१५कख/ मुहुर्मुहुर् मूत्रशकृत् करोति न ताड्यमानोऽप्य् अनुलोमयायी।
योगयात्रा-११.१५गघ/ अकार्यभीतोऽश्रुविलोचनश् च शिवं न भर्त्तुस् तुरगोऽभिधत्ते//E१५

## खड्गलक्षणाद्याय

योगयात्रा-१२.१कख/ अङ्गुलशतार्द्धम् उत्तम ऊनः स्यात् पञ्चविंशतिः खड्गः/(Bष् ४९.१)

योगयात्रा-१२.१गघ/ अंगुलमानाज् ज्ञेयः समांगुलस्थो व्रणः शुभदः॥

योगयात्रा-१२.२कख/ श्रीवृक्षवर्धमानातपत्रशिवलिङ्गकुण्डलाब्जानाम्/(Bष् ४९.२)

योगयात्रा-१२.२गघ/ सदृशा व्रणाः प्रशस्ता ध्वजायुधस्वस्तिकानां च॥

योगयात्रा-१२.३कख/ कृकलासकाककङ्कक्रव्यादकबन्धवृश्चिकाकृतयः/(Bष् ४९.३)

योगयात्रा-१२.३गघ/ खड्गे व्रणा न शुभदा वंशानुगताः प्रभूताश् च॥

योगयात्रा-१२.४कख/ स्फुटितो ह्रस्वः कुण्ठो वंशच्छिन्नो न दृङ्मनोऽनुगतः/(Bष् ४९.४)

योगयात्रा-१२.४गघ/ अस्वर इति चानिष्टः प्रोक्तविपर्यस्त इष्टफलः॥

योगयात्रा-१२.५कख/ क्वणितं मरणायोक्तं पराजयायाप्रवर्त्तनम् कोशात्/(Bष् ४९.५)

योगयात्रा-१२.५गघ/ स्वयम् उद्गीर्णे युद्धं ज्वलिते विजयो भवति खड्गे॥

योगयात्रा-१२.६कख/ नाकारणं विवृणुयान् न विघट्टयेच् च पश्येन् न तत्र वदनं न वदेच् च मूल्यम्/(Bष् ४९.६)

योगयात्रा-१२.६गघ/ देशं न वास्य कथयेत् प्रतिमानयेच् च नैव स्पृशेन् नृपतिर् अप्रयतोऽसियष्टिम्॥

योगयात्रा-१२.७कख/ गोजिह्वासंस्थानो नीलोत्पलवंशपत्रसदृशश् च/(Bष् ४९.७)

योगयात्रा-१२.७गघ/ करवीरपत्रसदृशश् चन्द्रमण्डलाग्रः प्रशस्तश् च॥

योगयात्रा-१२.८कख/ निष्पन्नो न छेद्यो निकषैः कार्यः प्रमाणयुक्तः सः/(Bष् ४९.८)

योगयात्रा-१२.८गघ/ मृते म्रियते स्वामी जननी तस्याग्रतश् छिन्ने॥

योगयात्रा-१२.९कख/ यस्मिन् त्सरुप्रदेशे व्रणो भवेत् तद्वद् एव खड्गस्य/(Bष् ४९.९)

योगयात्रा-१२.९गघ/ वनितानाम् इव तिलकं गुह्ये वाच्यो मुखे दृष्ट्वा॥

योगयात्रा-१२.१०कख/ अथवा स्पृशति यद् अङ्गं प्रष्टा निस्त्रिंशभृत् तद् अवधार्य/(Bष् ४९.१०)

योगयात्रा-१२.१०गघ/ कोशस्थस्यादेश्यो व्रणोऽसिशास्त्रं विदित्वेदम्॥

योगयात्रा-१२.११कख/ शिरसि स्पृष्टे प्रथमेऽङ्गुले द्वितीये ललाटसंस्पर्शे/(Bष् ४९.११)

योगयात्रा-१२.११गघ/ भ्रूमध्ये च तृतीये नेत्रे स्पृष्टे चतुर्थे च॥

योगयात्रा-१२.१२कख/ नासौष्ठकपोलहनुश्रवणग्रीवांशकेषु पञ्चाद्याः/(Bष् ४९.१२)

योगयात्रा-१२.१२गघ/ उरसि द्वादशसंस्थः त्रयोदशे कक्षयोर् ज्ञेयः॥

योगयात्रा-१२.१३कख/ स्तनहृदयोदरकुक्षौ नाभौ च चतुर्दशादयो ज्ञेयाः/(Bष् ४९.१३)

योगयात्रा-१२.१३गघ/ नाभीमूले कट्यां गुह्ये चैकोनविंशतितः स्यात्॥

योगयात्रा-१२.१४कख/ ऊर्वोर् द्वाविंशे स्याद् ऊर्वोर् मध्ये व्रणस् त्रयोविंशे/(Bष् ४९.१४)

योगयात्रा-१२.१४गघ/ जानुनि च चतुर्विंशे जघायां पञ्चविंशे स्यात्॥

योगयात्रा-१२.१५कख/ जङ्घामध्ये गुल्फे पार्ष्ण्यां पादे तथाङ्गुलीष्व् अपि च/(Bष् ४९.५)

योगयात्रा-१२.१५गघ/ षड्विंशादिषु यावत् त्रिंशाद् इति मतेन गर्गस्य॥

योगयात्रा-१२.१६कख/ पुत्रमरणं धनाप्तिर् धनहानिः सम्पदश् च वधश् च/(Bष् ४९.१६)

योगयात्रा-१२.१६गघ/ एकाद्यंगुलसंस्थैर् व्रणैः फलं निर्दिशेत् क्रमशः॥

योगयात्रा-१२.१७कख/ सुतलाभः कलहो हस्तिलयः पुत्रमरणधनलाभौ/(Bष् ४९.१७)

योगयात्रा-१२.१७गघ/ क्रमशो विनाशवनिताप्तिचित्तदुःखानि षट्प्रभृति॥

योगयात्रा-१२.१८कख/ लब्धिर् हानिस्त्रीलयो वधो वृधिमरणपरितोषाः/(Bष् ४९.१८)

योगयात्रा-१२.१८गघ/ ज्ञेयाश् च चतुर्दशादिषु धनहानिश् चैकविंशे स्यात्॥

योगयात्रा-१२.१९कख/ वित्ताप्तिर् अनिर्वाणं धनागमो मृत्युसम्पदोऽस्वत्वम्/(Bष् ४९.१९)

योगयात्रा-१२.१९गघ/ ऐश्वर्यमृत्युराज्यानि च क्रमात् त्रिंशद् इति यावत्॥

योगयात्रा-१२.२०कख/ परतो न विशेषफलं विषमसमस्थाश् च पापशुभफलदाः/(Bष् ४९.२०)

योगयात्रा-१२.२०गघ/ कैश् चिद् अफलाः प्रदिष्टास् त्रिंशत् परतोऽग्रम् इति यावत्॥

योगयात्रा-१२.२१कख/ करवीरोत्पलगजमदघृतकुंकुमकुन्दचम्पकसुगन्धिः/(Bष् ४९.२१)

योगयात्रा-१२.२१गघ/ शुभदो गोमूत्रहरितालपङ्कमेदसदृशगन्धिः॥

योगयात्रा-१२.२२कख/ कूर्मवसाऽस्टकक्षारोपमश् च भयदुःखदो भवति गन्धः/(Bष् ४९.२२)

योगयात्रा-१२.२२गघ/ वैदूर्यकनकविद्युत्प्रभो जयारोग्यवृद्धिकरः॥

योगयात्रा-१२.२३कख/ इदम् ऐशनसत्र् च शस्त्रपानं रुधिरेण श्रियम् इच्छतः प्रदीप्ताम्/(Bष् ४९.२३)

योगयात्रा-१२.२३गघ/ हविषा गुणवत् सुताभिलिप्सोः सलिलेनाक्षयम् इच्छतश् च वित्तम्॥

योगयात्रा-१२.२४कख/ वडवोष्ट्रकरेणदुग्धपानं यदि पापेन समीहतेऽर्थसिधिः/(Bष् ४९.२४)

योगयात्रा-१२.२४गघ/ झषपित्तमृगाश्ववस्तदुग्धैः करिहस्तच्छिदये सतालगर्भैः।
योगयात्रा-१२.२५कख/ आर्कं पयो हुडविषाणमषीसमेतं पारावताखुशकृता च युतं प्रलेषः/(Bष् ४९.२५)

योगयात्रा-१२.२५गघ/ शस्त्रस्य तैलमथितस्य ततोऽस्य पानं पश्चाच् छ्रितस्य न शिलासु भवेद् विघातः॥

योगयात्रा-१२.२६कख/ क्षारे कदन्या मथितेन युक्ते दिनोषिते पायुतमायसं यत्/(Bष् ४९.२६)

योगयात्रा-१२.२६गघ/ सम्यक् छिरितं चाश्मनि नैति भङ्गम् न चान्यलौहेष्व् अपि तस्य कौष्ठ्यम्//E२६

# प्रस्थानिकाध्याय

योगयात्रा-१३.१कख/ अन्तःपुराद् वा स्वनिवेशनाद् वा सिंहासनाद् अग्निपरिस्तराद् वा।
योगयात्रा-१३.१गघ/ कुर्यान् नरेन्द्रः प्रथमं प्रयाणं विप्रैः शताग्रैः कृतमङ्गलाशीः॥

योगयात्रा-१३.२कख/ द्विजो विष्णुक्रमाद् भूयं मन्त्रेणानेन दापयेत्।
योगयात्रा-१३.२गघ/ इदं विष्णुर् विचक्रम इत्य् एवं पादम् उद्धरेत्॥

योगयात्रा-१३.३कख/ अमुकस्य वधायेति दक्षिणं क्षितिपो न्यसेत्/ Kअने V. ६२१

योगयात्रा-१३.३गघ/ मङ्गलानि ततः पश्यन् स्पृशन् शृण्वन् नृपो व्रजेत्॥

योगयात्रा-१३.४कख/ वेदाङ्गवेदध्वनिशङ्खभेरीमृदङ्गपुण्याहपुराणशब्दाः।
योगयात्रा-१३.४गघ/ धर्मर्थशास्त्राणि च भारतं च रामायणं मङ्गलकीर्त्तनानि॥

योगयात्रा-१३.५कख/ वाचः शुभाः सारसचाषवर्हिणः कादम्बहंसाश् च सजीवजीवकाः।
योगयात्रा-१३.५गघ/ काकश् च पङ्काक्तवराहपृष्ठगः श्रीवृक्षवालव्यजनानि चन्दनम्॥

योगयात्रा-१३.६कख/ गौर्वत्सलाऽजो रुचकः प्(र्)इयङ्गुलाजा नृयुक्तश् च रथाः पताका।
योगयात्रा-१३.६गघ/ सर्वौषधी स्वस्तिकपूर्णपात्राण्य् अश्वोऽथ दूर्वाद्रकगोमयं च॥

योगयात्रा-१३.७कख/ सरांस्य् अशोष्यानि सरित्समुद्रा रुद्रेन्द्रलोकेशमहीध्रनागाः।
योगयात्रा-१३.७गघ/ दिशो ग्रहर्क्षाणि शिवः सुपर्णः स्कन्दो विशाखो मरुतश् च साध्याः॥

योगयात्रा-१३.८कख/ भूर् द्वादशार्का वसवोऽश्विनौ च स्वाहा शाची मातृगणो भवानी।
योगयात्रा-१३.८गघ/ पत्न्यो जनन्यश् च सुरासुराणां साध्योगणाश् चाप्सरसः सविद्याः॥

योगयात्रा-१३.९कख/ यक्षाः ससिद्धा मुनयः सजायाः पर्जन्यकम्पद्रुममारुताश् च।
योगयात्रा-१३.९गघ/ प्रजापतिः सर्वगतश् च विष्णुः शिवाय ते भूप भवन्तु याने॥

योगयात्रा-१३.१०कख/ सिद्धार्थकादर्शपयोञ्जनानि बद्धैकपश्वामिषपूर्णकुम्भाः। योगयात्रा-१३.१०गघ/ उष्णीषभृङ्गारनृवर्धमानपुंयानवीणातपवारणानि॥

योगयात्रा-१३.११कख/ दधि मधु घृत रोचना कुमारी ध्वजकनकाम्बुजभद्रपीठशङ्खाः।
योगयात्रा-१३.११गघ/ सितवृषकुसुमाम्बराणि मीनद्विजगणिकाप्तजनाश् च चारुवेषाः॥

योगयात्रा-१३.१२कख/ ज्वलितशिखिफलाक्षतेक्षुभक्ष्या द्विरदमृदङ्कुशचामरायुधानि।
योगयात्रा-१३.१२गघ/ मरकतकुरुविन्दपद्मरागाः स्फतिकमणिप्रमुखाश् च रत्नमेदाः॥

योगयात्रा-१३.१३कख/ स्वयम् अथ रचितान्य् अयत्नतो वा यदि कथितानि भवन्ति मङ्गलानि।
योगयात्रा-१३.१३गघ/ स जयति सकलां ततो धरित्रीं प्रहणद्दगालभनश्रुतैर् उपास्य॥

योगयात्रा-१३.१४क/ कार्पासौषधकृष्णधान्यलवणक्लीवास्थितैलं वसा

योगयात्रा-१३.१४ख/ पङ्काङ्गारगुडाहिचर्मशकृतः केशाय सव्याधिताः।
योगयात्रा-१३.१४ग/ वान्तोन्मत्तजडेन्धनतृणतुषक्षुत्क्षामतक्रारयो

योगयात्रा-१३.१४घ/ मुण्डाभ्यक्तविमुक्तकेशपतिताः काषाविनश् चाशुभाः॥

योगयात्रा-१३.१५कख/ पटुपटहमृदङ्गशङ्खभेरीवणवरदं सपताकतोरणाग्रम्।
योगयात्रा-१३.१५गघ/ प्रचुरकुसुमतोयशान्तरेणुं सुरभिसुवेषजनं व्रजेच् च मार्गम्॥

योगयात्रा-१३.१६कख/ यान्य् अत्र मङ्गलामङ्गलानि निर्गच्छतां प्रदिष्टानि।
योगयात्रा-१३.१६गघ/ स्वप्नेष्व् अप्य् एतानि शुभाशुभानि विड्लेपनं धन्यम्॥

# शकुनाध्याय

योगयात्रा-१४.१कख/ छुछुन्दरी शूकरिका शिवा च श्यामा रला पिङ्गलिकाऽन्यपुष्टा।
योगयात्रा-१४.१गघ/ वामा प्रशस्ता गृहगोधिका च पुंसंज्ञका ये च पतत्रिणः स्युः॥

योगयात्रा-१४.२कख/ श्येनो रुरुः पूर्णकुटः कपिश् च श्रीकर्णछिक्कारकपिप्पिकाऽजाः।
योगयात्रा-१४.२गघ/ स्त्रीसंज्ञका ये च शिखिद्विपौ च याने हिता दक्षिणभागसंस्थाः॥

योगयात्रा-१४.३कख/ आस्फोटिताक्ष्वेडितशङ्खतूर्यपुंयाहवेदध्वनिगीतशब्दाः।
योगयात्रा-१४.३गघ/ वामाः प्रयाणे शुभदा नराणाम् आक्रन्दितं दक्षिणतः परेषाम्॥

योगयात्रा-१४.४क/ भारद्वाज्यजवर्हिचाषनकुलाः सङ्कीर्त्तनाद् दर्शनात्

योगयात्रा-१४.४ख/ क्रोशन्तश् च शुभप्रदा न सरटो दृष्टः शिवाय क्वचित्।
योगयात्रा-१४.४ग/ गोधाशूकरजाहकाहिशशकाः पाषा रुतालोकने

योगयात्रा-१४.४घ/ धन्यं कीर्त्तनम् ऋक्षवानरफलं तद् व्यत्ययाच् छोभनम्॥

योगयात्रा-१४.५कख/ नकुलस्य मृगस्य पक्षिणां वामाद् दक्षिणभागसेवनम्।
योगयात्रा-१४.५गघ/ शुभदं श्वशृगालयोर् इदं व्यत्यासेन फलं प्रशस्यते॥

योगयात्रा-१४.६कख/ चाषो नकुलश् च वामगौ दिवसार्धात् परतः शुभप्रदौ।
योगयात्रा-१४.६गघ/ मृगवच् च वनेषु कुक्कुराः शतपत्रोऽस्तमये च दक्षिणः॥

योगयात्रा-१४.७कख/ नष्टावलोकनसमागमयुद्धक्रमवेश्मप्रवेशम् अनुजेश्वरदर्शनेषु।
योगयात्रा-१४.७गघ/ यानप्रतीपविधिना शुभदा भवन्ति केचिज् जगुर् गमनवन् नृपदर्शनेषु॥

योगयात्रा-१४.८कख/ निरुपहतमनोज्ञवृक्षसंस्थः शुचिरुचिरावनिसस्यसंस्थिताश् च। योगयात्रा-१४.८गघ/ शुभतिथिदिवसर्क्षलग्नकालेष्व् अशुभफलोऽपि शुभप्रदः प्रदिष्टः॥

योगयात्रा-१४.९कख/ प्रभग्नशुष्कद्रुमकण्टकेषु श्मशानभस्मास्थितुषाकुलेषु।
योगयात्रा-१४.९गघ/ प्राकारशून्यालयदुर्दशेषु सौम्योऽपि पापः शकुनः प्रदिष्टः॥

योगयात्रा-१४.१०कख/ अङ्गारिणी दिग् रविणा प्रमुक्ता यस्यां रविस् तिष्ठति सा प्रदीप्ता।
योगयात्रा-१४.१०गघ/ प्रधूमिता यास्यति यां दिनेशः शेषाश् च शान्ताः शुभदाश् च ताः स्युः॥

योगयात्रा-१४.११कख/ यातं मुक्तायां साम्प्रतं दीपितायाम् एष्यं ज्ञेयं धूमितायाम् अनिष्टम्।
योगयात्रा-१४.११गघ/ शान्तास्व् एवं दिक्षु तत्पञ्चमासु प्रत्यासन्नं शेषयोः शान्तदीप्तम्॥

योगयात्रा-१४.१२कख/ पिशिताशुचिभोजनः प्रदीप्तस् तृणफलभुक् च निसर्गतः प्रशान्तः।
योगयात्रा-१४.१२गघ/ उभयः कथितस् तथान्नभोजी दिक्स्थानोदयकालतश् च चिन्त्याः॥

योगयात्रा-१४.१३कख/ द्वन्द्वार्त्तरोगार्दितभीतमत्तवैरार्त्तयुद्धामिषकांक्षिणश् च।
योगयात्रा-१४.१३गघ/ सीमान्तनद्यन्तरिताश् च सेर्वे न चिन्तनीयाः सदसत्फलेषु॥

योगयात्रा-१४.१४कख/ रिक्तोऽनुकूलः कलशो जलार्थम् अभ्युद्यतः सिद्धिकरः प्रयाणे।
योगयात्रा-१४.१४गघ/ विद्यार्थिनां चौर्यसमुद्यतानां वणिक्क्रियाभ्युद्यमिनाम् अतीव॥

योगयात्रा-१४.१५क/ श्यामाश्येनशशघ्नवञ्जलशिखिश्रीकर्णचक्राह्वयाश्

योगयात्रा-१४.१५ख/ चाषाण्दीरकखञ्जरीटकशुकाः ध्वांक्षः कपोतास् त्रयः।
योगयात्रा-१४.१५ग/ भारद्वाजकुलालकुक्कुटखरा हारीतगृध्रौ कपिस्

योगयात्रा-१४.१५घ/ फेटौ कुक्कुरपूर्णकूटचटकाश् चोक्ता दिवासंचराः॥

योगयात्रा-१४.१६कख/ लोमासिका पिङ्गलछप्पिकाख्यौ वल्गुल्युलूकौ शशकश् च रात्रौ।
योगयात्रा-१४.१६गघ/ सर्वे स्वकालोत्क्रमचारिणः स्युर् दशस्य नाशाय नृपान् तदा वा॥

योगयात्रा-१४.१७कख/ हयनरभुजगोष्ट्रद्वीपिसिंहर्क्षगोधावृकनकुलकुरङ्गश्वाजगोव्याघ्रहंसाः।
योगयात्रा-१४.१७गघ/ पृषतमृगशृगालश्वाविधाख्याऽन्यपुष्टा द्युनिशम् अपि विडालः सारसः शूकरश् च॥

योगयात्रा-१४.१८कख/ द्युनिशोभयचारिणः स्वकाले पुरवनमिश्रचराः स्वभूमिसंस्थाः।
योगयात्रा-१४.१८गघ/ सफला विफला विपर्ययस्था गमनेप्सोः पुरपार्थिवाशुभास् ते॥

योगयात्रा-१४.१९कख/ यानं धुरेण पतितं बृहती च कन्या गर्भेण चातिमहता पुरतः स्थितो स्त्री।
योगयात्रा-१४.१९गघ/ आगच्छ तिष्ठ विश गच्छसि वा किम् अर्थं शब्दाः स्थिरश् च गमनं प्रतिषेधयन्ति॥

योगयात्रा-१४.२०कख/ गान्धारषड्जऋषभाः खलु मध्यमश् च याने स्वराः शुभकरा न तु येऽत्र शेषाः।
योगयात्रा-१४.२०गघ/ ग्रामौ शुभाव् अपि च मध्यमषड्जसञ्ज्ञौ गान्धारगीतम् अपि भद्रम् उशन्ति देवाः॥

योगयात्रा-१४.२१कख/ सर्वत्र पापं क्षुतम् उद्दिशन्ति गोस् तु क्षुतं मृत्युकरं यियासोः।
योगयात्रा-१४.२१गघ/ मार्जाररावस्खलनं च यातुर् वस्त्रस्य भङ्गश् च न शोभनानि॥

योगयात्रा-१४.२२कख/ जलकरश्वकरौ न शुभौ प्राग्घातकशस्त्रकरौ यमदिक्स्थौ।
योगयात्रा-१४.२२गघ/ षण्ढकमद्यकराव् अपि पश्चात् आसनसीरखलैः सह चोदक्॥

योगयात्रा-१४.२३कख/ द्रव्याणि शुक्लानि तुरङ्गमश् च पूर्वेण याम्येन शवं समासम्।
योगयात्रा-१४.२३गघ/ पश्चात् कुमारी दधि चातिशस्तं सौम्येन गोब्राह्मणसाधवश् च॥

योगयात्रा-१४.२४कख/ यः पूर्णकूटः सकरायिकाख्यो वामः प्रशस्तः स च पूर्वदेशे।
योगयात्रा-१४.२४गघ/ काकः शुभो दक्षिणतश् च तेषाम् अन्येषु देशेषु विपर्ययेण॥

योगयात्रा-१४.२५कख/ वामे शस्तो धन्वनः सिद्धिदाता प्रोत्तुङ्गश् चेद् धस्तमात्रम् जयाय।
योगयात्रा-१४.२५गघ/ आकायश् चेद् उन्नतो वामभागे पृथ्वीलाभं धन्वनागः करोति॥

योगयात्रा-१४.२६कख/ नरतुरगगजातपत्रकुम्भध्वजशयनासनपुष्पचामराणि।
योगयात्रा-१४.२६गघ/ व्रजति यदि पुरोऽवमूत्र्य यातुः क्षपयति शत्रुबलं ततो नरेन्द्रः॥

योगयात्रा-१४.२७कख/ विषकण्टकिशुष्कवृक्षलोष्टान् अवमूत्र्यास्थिचितेन याति चेच् छवा।
योगयात्रा-१४.२७गघ/ न शुभोऽभिमुखो भषन् विधुन्वन् युध्यन् गां विलिखन् नखैर् वमंश् च॥

योगयात्रा-१४.२८कख/ उत्तानापादः स्वपते च पापो विलोक्य सूर्यं विरुवंश् च दीनम्।
योगयात्रा-१४.२८गघ/ शुष्कास्थिलाभाभिमुखश् च कष्टो मांसादिभिः पूर्णमुखश् च शस्तः॥

योगयात्रा-१४.२९कख/ पूर्णाननो यस्य क्रोति चाषः प्रदक्षिणं स्वस्तिकम् एव वा खे।
योगयात्रा-१४.२९गघ/ लाभो महान्तस्य पराभवाय कालेन भङ्गो विजयो जयोऽस्य॥

योगयात्रा-१४.३०कख/ कार्यन्तु मूलशकुनेऽन्तरजे तद् अह्नि विन्द्यात् फलं नियतम् एवम् इमे विचिन्त्याः।
योगयात्रा-१४.३०गघ/ प्रारंभयानसमयेषु तथा प्रवेशे ग्राह्यं क्षुतन् न शुभदं क्वचिद् अप्य् उशन्ति॥

योगयात्रा-१४.३१क/ क्रोशाद् ऊर्ध्वं शकुनविरुतं निष्फलं प्राहुर् एके

योगयात्रा-१४.३१ख/ तत्रानिष्टे प्रथमशकुने मानयेत् पञ्च षट् च।
योगयात्रा-१४.३१ग/ प्राणायामान् नृपतिर् अशुभे षोडशैवं द्वितीये

योगयात्रा-१४.३१घ/ प्रत्यागच्छेत् स्वभवनम् अतो यद्य् अनिष्टस् तृतीयः॥

योगयात्रा-१४.३२कख/ शुभं दशापाकम् अविघ्नसिद्धिं मूलाभिरक्षाम् अथवा सहायान्।
योगयात्रा-१४.३२गघ/ दुष्टस्य संसिद्धिम् अनामयत्वं वदन्ति ते मानयितुर् नृपस्य//E३२

# प्रोत्साहनाध्याय

योगयात्रा-१५.१कख/ शूरकृतास्रमहाकुलजाताः स्वामिहिता बलिनः कृतयोग्याः।
योगयात्रा-१५.१गघ/ दृष्टगुणा बहुबान्धवमित्रा नागकरोरुभुजाः कठिनाङ्गाः॥

योगयात्रा-१५.२कख/ व्याघ्रमृगेश्वरगोवृषनादाः श्येनदृशः शुकसन्निभनासाः।
योगयात्रा-१५.२गघ/ केकरजिह्मनिमीलितनेत्राः पुण्यकृतां समरेषु सहायाः॥

योगयात्रा-१५.३कख/ देशगुणैः प्रथिताश् च पुरोगास् ते बहवो गुणलक्षणलक्ष्याः।
योगयात्रा-१५.३गघ/ कालभृतो भृकुटीकृतवक्रावमभृतो विविधायुधहस्ताः॥

योगयात्रा-१५.४कख/ दण्डोरगौ रविसुतस्य रवेस् तु चक्रं शुक्रस्य पद्मशकटौ गरुडो बुधस्य।
योगयात्रा-१५.४गघ/ व्यूहौ तु सूचिमकरौ धरणीसुतस्य श्येनो गुरोः शिशिरगोर् अपि मण्डलाख्यः॥

योगयात्रा-१५.५कख/ व्यूहम् आत्मशुभदग्रहस्य यद् विद्विषाम् अशुभसंस्थितस्य वा।
योगयात्रा-१५.५गघ/ तत्प्रयोज्यम् अरियोजितस्य वा घातनं तदरिभिर् बलोत्तरैः॥

योगयात्रा-१५.६क/ रणे प्रत्यासन्ने सदसि नृपतिर् मन्त्रिविदितं

योगयात्रा-१५.६ख/ बलोत्साहं कुर्याद् अहितवलविद्रावणकरम्।
योगयात्रा-१५.६ग/ जयं नो दैवज्ञः कथयति जनः सत्यवचनो

योगयात्रा-१५.६घ/ निमित्तानीष्टानि द्विपतुरगयोधादिषु च मे॥

योगयात्रा-१५.७क/ अभिजनयुता यूयं सौर्यं जनाः कथयन्ति वो

योगयात्रा-१५.७ख/ धनुषि कणये चक्रे शक्त्याम् असौ च कृतश्रमाः।
योगयात्रा-१५.७ग/ मयि च भवताम् अस्ति स्नेहः कथन् न जयो मम

योगयात्रा-१५.७घ/ द्विरदतुरगं स्याद् आक्रान्तं भवद्भिर् इदं यदा॥

योगयात्रा-१५.८कख/ बृंहन्ति हेषन्ति शिवं ब्रुवन्ति दीप्यन्ति शोचन्ति मुदान्विताश् च।
योगयात्रा-१५.८गघ/ नागाश्वविप्रानलशत्रुयोधाः कः संशयश् चात्र रणे जयस्य॥

योगयात्रा-१५.९कख/ द्वेषायनेन मुनिना मनुना च धर्मा युद्धेषु ये निगदिता विदितास् तु ते वः।
योगयात्रा-१५.९गघ/ स्वाम्यर्थगोद्विजहिते त्यजतां शरीरं लोका भवन्ति सुलभा विपुलं जयश् च॥

योगयात्रा-१५.१०कख/ तपस्विभिर् या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिर् इज्यया च या।
योगयात्रा-१५.१०गघ/ व्रजन्ति ताम् आशु गतिं मनस्विनो रणाश्वमेधे पशुताम् उपागतः॥

योगयात्रा-१५.११कख/ यस्य तपो न जनाः कथयन्ति नो मरणं समरे विजयञ् च।
योगयात्रा-१५.११गघ/ न श्रुतदानमहाधनतां वा तस्य भवः कृमिकीटसमानः॥

योगयात्रा-१५.१२कख/ सरक्ष्यमाणम् अपि नाशम् उपैत्य् अवश्यम् एतच् छरीरम् अपहाय सुहृत्सुतार्थान्।
योगयात्रा-१५.१२गघ/ तत् किं वरं प्रलपतां सुहृदां समक्षं किं निघ्नतः परबलं भृकुटीमुखस्य॥

योगयात्रा-१५.१३कख/ हा तात मातेति च वेदनार्त्थाः धवणत्र् छकृन्मूत्रकफानुलिप्तः।
योगयात्रा-१५.१३गघ/ वरं मृतः किं भवने किम् आजौ सन्दष्टदन्तच्छदभीमवक्त्रः॥

योगयात्रा-१५.१४कख/ लोकः शुभस् तिष्ठतु तावद् अन्यः पराङ्मुखानां समरेषु पुंसाम्।
योगयात्रा-१५.१४गघ/ पत्न्योऽपि तेषां न ह्रिया मुखानि पुरः सखीनाम् अवलोकयन्ति॥

योगयात्रा-१५.१५कख/ शत्रुसैन्यम् अवदार्य वर्त्ततां यत् सुखन्तु कथयामि तादृशम्।
योगयात्रा-१५.१५गघ/ शृण्वतां स्वयशसोग्रपल्लवान् दिग्बधूवदनकर्णपूरकान्॥

योगयात्रा-१५.१६कख/ निपतति शिरसि द्विपस्य सिंहः स्वतनुशताधिकमांसराशिमूर्त्तेः।
योगयात्रा-१५.१६गघ/ पिबति च तदसृग्मदेष्टगन्धं वदनगतांश् च शनैः प्रसृज्य मुक्तान्॥

योगयात्रा-१५.१७कख/ मणिकनकविभूषिता युवत्यो द्विपतुरगं वसु चामरानिलश् च।
योगयात्रा-१५.१७गघ/ अविरलशशिकान्ति चातपत्रं भवति न मातृमुखस्य युद्धभीरोः॥

योगयात्रा-१५.१८कख/ रुचिमत्कु बाहुपञ्जरे हरिनाक्ष्यः प्रवरोरुपीडनम्।
योगयात्रा-१५.१८गघ/ रमयन्ति विमानसंस्थिताः सुरबध्वोऽतिमुदा रणार्जिताः॥

योगयात्रा-१५.१९कख/ एकतोऽस्य सुरसुन्दरीजनः श्रीः प्रतीच्छति युयुत्सुतोऽन्यः।
योगयात्रा-१५.१९गघ/ पद्मया सह पलायते यशश् चैकतः कुलकलङ्ककारकम्॥

योगयात्रा-१५.२०कख/ आरामदेवकुलकूपतडागयज्ञा ये वः कृता बिलसितत्र् च नृपप्रसादात्।
योगयात्रा-१५.२०गघ/ तद् वो वृथो यदि न निश्छलमाजिमध्ये विद्युल्लताविकसितानि करोति वोऽसिः॥

योगयात्रा-१५.२१कख/ चित्रं किम् अस्मिन् वद साहसं वा यत् स्वामिनोऽर्थे गनयन्ति नासून्।
योगयात्रा-१५.२१गघ/ युद्धात् प्रनष्टो विदितोऽरिमध्ये यद्वालिश स्तष्ठति साहसं तत्॥

योगयात्रा-१५.२२कख/ न केवलं गात्रविभूषणानि क्षतानि शूरस्य रणे कृतानि।
योगयात्रा-१५.२२गघ/ यशस्तरोर् मूलकृषिक्षतानि तान्य् एव वंशस्य विभूषणानि॥

योगयात्रा-१५.२३कख/ भग्नेषु योधेष्व् अवपूर्य शस्त्राण्य् आजौ प्रवृत्ता व्यसवः कृता ये।
योगयात्रा-१५.२३गघ/ ऊर्ध्वाननना वाजिमखाप्तलोकास् तेषां विमानान्य् अवलोकयन्ति॥

योगयात्रा-१५.२४कख/ यैर् श्वमेधेऽभिहितं फलं वा देवैर् द्विजैर् वा श्रुतिशास्त्रकारैः।
योगयात्रा-१५.२४गघ/ तैर् एव भङ्गे प्रतिलोमगस्य पदे पदे वाजिमखः प्रदिष्टः॥

योगयात्रा-१५.२५कख/ स्वर्गस्य मार्गा बहवः प्रदिष्टास् ते कृच्छ्रसाध्याः कुटिलाः सविघ्नाः।
योगयात्रा-१५.२५गघ/ निमेषमात्रेण महाफलोऽयम् ऋजुश् च पन्थाः समरे व्यासुत्वम्॥

योगयात्रा-१५.२६कख/ दृष्टाइश्वर्यं स्वामिगोब्राह्मणार्थे त्यक्तासूनां सङ्गरे सङ्गतानाम्।
योगयात्रा-१५.२६गघ/ कृच्छ्रोपायैर् अर्जितस्वर्गलोकाः जन्मेच्छन्ति क्षिप्रम् एवाजिलोभात्॥

योगयात्रा-१५.२७कख/ संमूर्च्छितं संयुगसंप्रहारैः पश्यन्ति सुप्तप्रतिबुद्धतुल्यम्।
योगयात्रा-१५.२७गघ/ आत्मानम् अङ्केषु सुराङ्गनानां मन्दाकिनीमारुतबीजिताङ्गाः॥

योगयात्रा-१५.२८कख/ जीवितोऽपि निहतस्य वा रणे धर्म एव हि नरस्य युध्यतः।
योगयात्रा-१५.२८गघ/ निश्चयान् न मरणां हि सङ्गरे नैव भीरुजरामरः क्वचित्॥

योगयात्रा-१५.२९कख/ मानमात्रम् अवलम्ब्य युध्यते कीटकोऽपि विहगोऽथ वा पशुः।
योगयात्रा-१५.२९गघ/ को हि नाम पुरुषस् त्यजेद् रणं स्वगमानसुखकीर्त्तिवित्तदम्॥

योगयात्रा-१५.३०कख/ यद् अभावि न मेऽस्ति तत् क्वचित् सदसद्भावि न मे क्व यास्यति।
योगयात्रा-१५.३०गघ/ इति संपरिचिन्त्य पण्डिताः परसैन्यानि विशन्त्य् अविक्लवाः॥

योगयात्रा-१५.३१कख/ उरः कृत्वा वेद्यां मणिफलकगाढस्थितकुचं भुजा वालम्ब्यैर् हीत्यमरवनिता व्योमगृहगाः।
योगयात्रा-१५.३१गघ/ अपद्वारेणैवं त्वरितपदम् अत्याहुर् अपरा हतं हस्तालघ्वैर् हरति सुरलोको रणमुखात्॥

योगयात्रा-१५.३२क/ हंसाढयं मणिवेदिकाकुहरकव्यालं बिहाराम्बरं

योगयात्रा-१५.३२ख/ निर्व्यूहस्थितरत्नचित्रकनकं स्तम्भाश्रितं व्यालकम्।
योगयात्रा-१५.३२ग/ घण्टाकिङ्किणिचारुचामरयुतस्त्रीगीतनृत्यान्वितं

योगयात्रा-१५.३२घ/ बालार्कोपमम् आविशन्त्य् अभिमुखा युद्धे विमानं हताः//E३२

# उपसंहाराध्याय

योगयात्रा-१६.१कख/ अत्र ध्वजप्रहरणान्य् अभिमन्त्रितानि कुर्वन्ति शत्रुकदन रिपुवाहिनीनाम्।
योगयात्रा-१६.१गघ/ मन्त्रं जगाद भगवान् उशनाः स्वशास्त्रे यल् लिख्यते स इह पूर्वविधिक्रमेण॥

योगयात्रा-१६.२कख/ ।
योगयात्रा-१६.२गघ/ प्रचलितगजवाजिशूरयोधं समभिमुखोद्यतशस्त्रम् अभ्युपेतम्।
योगयात्रा-१६.२ef/.अभिमुखदिनकृत्प्रभञ्जनं च स्थिरहृदयोऽरिबल सुखं निहन्यात्॥

योगयात्रा-१६.३कख/ अशुभखगमृगं च दक्षिणे निपतति केतुपताकभेव वा।
योगयात्रा-१६.३गघ/ परुषविषममन्दजर्जरो यदि खलु तूर्यरवोऽस्य वामतः॥

योगयात्रा-१६.४कख/ यत् पृष्ठतः सेषुगजाश्वयोधम् निष्ठितव्यूहमरातिसैन्यम्।
योगयात्रा-१६.४गघ/ यस्येन्द्रचापं च ललाटसंस्थ तत् पृष्ठभागः कुशलोऽभिहन्यात्॥

योगयात्रा-१६.५कख/ नार्त्ता न भीता न तृणाननाश् च विमुक्तशस्त्राः प्रपलयमानाः।
योगयात्रा-१६.५गघ/ क्षीणायुधा वाजिगजावतीर्णा ह्य् एते न बध्या न च पीडनीयाः॥

योगयात्रा-१६.६कख/ कुलैकतन्तुः शरणागतो वा कृताञ्जलिर्यश् च वदेत् तवऽस्मि।
योगयात्रा-१६.६गघ/ अयुध्यमानान् अवगम्य हन्याश् न पालकान् स्त्रीपरिरक्षितांश् च॥

योगयात्रा-१६.७कख/ दिग्दाहक्षितिजरजोश्मवृष्टिपातैर् निर्घातक्षितिचलनादिवैकृतैश् च।
योगयात्रा-१६.७गघ/ युद्धान्ते मृगशकुनैश् च दीप्तनादैर् नो भद्रं भवति जयेऽपि पार्थिवस्य॥

योगयात्रा-१६.८कख/ शुभा मृगपतत्रिणो मृदुसमीरणोह्लादकृद् ग्रहाः स्फुटमरीचयो विगतरेणुदिग्मण्डलम्।
योगयात्रा-१६.८गघ/ यद् अन्यम् अपि वैकृतन् न विजयावसाने यदा तदा सुखम् अकण्टकं नृपतिर् अत्ति देशं रिपोः॥

योगयात्रा-१६.९कख/ परविषयपुराप्तौ साधुदेवद्विजस्वं कुलजनवनिताश् च क्ष्माधिपो नोपरुन्ध्यात्।
योगयात्रा-१६.९गघ/ जनपदहितयुक्तान् पूजयेत् पौरमुख्यान् शुभतिथिकरणर्क्षे हृष्टसैन्यो विशोच् च॥

योगयात्रा-१६.१०कख/ दृति मनुजपतिर् यथोपदेशं भगणविदां प्रकरोति यो वचांसि।
योगयात्रा-१६.१०गघ/ स सकलमहिमण्डलाधिपत्यं व्रजति दिवीव पुरन्दरोऽचिरेण॥

योगयात्रा-१६.११कख/ अलब्धलिप्सा प्रथमं नृपस्य लब्धस्य संरक्षणसम्प्रवृद्धी।
योगयात्रा-१६.११गघ/ सम्यक् प्रवृद्धस्य च लाभकोऽयं तीर्थेषु सम्यक् पतिपादनानि॥

योगयात्रा-१६.१२कख/ केन्द्रेषु सौम्यैर् गुरुशुक्रलग्ने पापेषु केन्द्राष्टमवर्जितेसु।
योगयात्रा-१६.१२गघ/ प्राम्ये स्थिरे वाऽनिधने च लग्ने गृहं विशेच् छ्रीतकरेऽनुकूले।
योगयात्रा-१६.१३कख/ पौष्णे धनिष्ठास्व् अथ वारुणेषु स्वायम्भुवर्क्षेषु त्रिषूत्तरासु। योगयात्रा-१६.१३गघ/ अक्षीणचन्द्रे शुभवासरे च तिथाव् अरिक्ते च गृहप्रवेशः॥

योगयात्रा-१६.१४कख/ धर्मेण पृथ्वीं किल पालयित्वा जलाशयारामसुरालयाढ्याम्।
योगयात्रा-१६.१४गघ/ कृत्वा सकूपां चितिभिश् चितात्र् च जयन्ति लोकान् अमरेश्वरस्य॥

योगयात्रा-१६.१५कख/ स्वविषयम् उपगम्य मानवेन्द्रो वल्लिम् उपयाचितकानि चाधिकानि।
योगयात्रा-१६.१५गघ/ निगदितविधिनैव सम्प्रददयात् प्रमथगणासुरभूतदेवताभ्यः॥

योगयात्रा-१६.१६कख/ यात्रावतार आदाव् आचारश् वाभियोज्यको देशः।
योगयात्रा-१६.१६गघ/ योगाध्यायो भिषकबल्युपहारौ तथा स्नानम्॥

योगयात्रा-१६.१७कख/ अग्निनिमित्तं नक्षत्रकैन्दुभं लक्षणं तथा वार्याः।
योगयात्रा-१६.१७गघ/ शालाविधिर् गजेङ्गितमदकरणं वाजिचेष्टा च॥

योगयात्रा-१६.१८कख/ खड्गविधिः प्रस्थानं शाकुनम् उत्साहपुरनिवेशश् च।
योगयात्रा-१६.१८गघ/ अध्यायसंप्रहोऽयं समासतश् चात्र निर्दिष्टः//E१८

**इति योगयात्रा**